वर्षम्-२२ अङ्कः-१
जुलाई तः सितम्बर २०२३ पर्यन्तम्

RNI No.
DELSAN/2002/8921
ISSN : 2278-8360

# संस्कृत-मञ्जरी

विद्वत्-समीक्षित एवं सन्दर्भित त्रैमासिकी शोध पत्रिका

A Peer- Reviewed & Refereed Quarterly Research Journal




दिल्ली संस्कृत अकादमी
दिल्ली सर्वकारः

सम्पादकः
डॉ.अरुण कुमार झा
सचिवः

सुरुचिपूर्ण मासिक बाल संस्कृत पत्रिका

# "संस्कृत-चन्द्रिका"

नैतिक-मूल्यों के साथ-साथ
सम्पूर्ण देश के बाल-साहित्यकारों तथा नवोदित प्रतिभाओं
की लेखनी की संयुक्त प्रस्तुति

# "संस्कृत-चन्द्रिका"

( आई.एस.एस.एन.-2347—1565 )

संस्कृत भाषा के प्रचार-प्रसार हेतु प्रयत्नशील दिल्ली संस्कृत अकादमी, दिल्ली सरकार द्वारा सरल संस्कृत-भाषा में प्रकाशित एक ऐसी सुरुचिपूर्ण एवं ज्ञान-विज्ञान तथा नैतिक शिक्षा की बाल- मासिक पत्रिका जो प्रत्येक वर्ग के पाठक-समुदाय की अपेक्षा के अनुकूल पठनीय एवं संग्रहणीय है।

**मूल्यः- एक प्रति रु.२५/- मात्र, वार्षिक सदस्यता शुल्क रु. २५०/- मात्र**

सुरुचि सम्पन्न स्वस्थ सकारात्मक अभिव्यक्ति की संवाहिका

# "संस्कृत-चन्द्रिका"

के स्थायी अध्येता बनें।

आज ही अपना वार्षिक सदस्यता अन्तर्जाल माध्यम ( online ) से, मनिआर्डर अथवा दिल्ली में भुनाये जाने योग्य बैंक ड्राफ्ट दिल्ली संस्कृत अकादमी के नाम से भिजवाकर सदस्यता प्राप्त करें। शुल्क मल्टी सिटी चैक द्वारा भी स्वीकार्य होगा।




पत्र व्यवहार का पता --

**सचिव/ सम्पादक, दिल्ली संस्कृत अकादमी, दिल्ली सरकार**
**प्लाट सं.-५ झण्डेवालान, करोलबाग, नई दिल्ली-११०००५**
**दूरभाष सं.- ०११-२३६३५५९२, २०९२०३६३**

अन्ताराष्ट्रिया त्रैमासिकी शोध-पत्रिका

आई0एस0एस0एन0-2278-8360



# संस्कृत-मञ्जरी

वर्षम्-२२ अङ्कः-१/२०२३

(जुलाई तः सितम्बर २०२३ पर्यन्तम्)



**सम्पर्कः**
सचिवः
दिल्ली-संस्कृत-अकादमी, दिल्ली-सर्वकारः
प्लॉट सं०-५, झण्डेवालानम्, करोलबागोपनगरम्, नवदेहली-११०००५
दूरभाषः - ०११-२०९२०३६२
अणुसङ्केतः - sanskritpatrika.dsa@gmail.com
**वेब साईट** - https://sanskritacademy.delhi.gov.in
**ग्राहकतायाः कृते**
प्रत्यङ्कं मूल्यम्- पञ्चविंशतिः रूप्यकाणि
वार्षिकशुल्कम् - शतं रूप्यकाणि

# अनुक्रमणिका

# सम्पादकीयम्

**अयि सुरवाणीसमुपासकाः सहृदयाः !**

विश्वस्य सर्वासु भाषासु संस्कृतभाषा अत्यन्तप्राचीनतमा वर्तते एतत् सर्वविदितमस्ति। वैदिकालादेव ज्ञान–विज्ञानस्य धारा नैरन्त्येण प्रवाहमाना वर्तते। इयं संस्कृतभाषा शास्त्रज्ञानस्य आध्यात्मिकज्ञानस्य नैतिकमूल्यस्य च आधारभूता वर्तते। अस्यामेव भाषायां विश्वस्य वेद–वेदाङ्ग–दर्शन–धर्मशास्त्रादि–प्राचीनसाहित्यं निबद्धं वर्तते। भारतीयचिन्तनस्य आरम्भस्तु वेदादेव भवति। वैदिकवाङ्मये समुपलब्धेभ्यः आख्यानेभ्य एव रामायणस्य महाभारतस्य पुराणादीनां च रचना अभवत्। वैदिकवाङ्मयस्य दार्शनिकसूक्तिभ्यो दर्शनशास्त्रस्य, धर्मसूत्रेभ्यः धर्मशास्त्रस्य अर्थशास्त्रस्य वा, अर्थवादात्मकसूक्तिभ्यश्च काव्यसाहित्यस्योद्भवः जातः। एवं प्रकारेण ऋग्वेदाद् आयुर्वेदस्य, यजुर्वेदाद् धनुर्वेदस्य, सामवेदाद् गान्धर्ववेदस्य अथर्ववेदाच्च अर्थशास्त्रस्य शिल्पशास्त्रस्य वा उद्भवः जातः। वेदाङ्गभागेभ्यः गणितविज्ञानस्य खगोलविज्ञानस्य ज्योतिर्विज्ञानस्य रसायनविज्ञानस्य भौतिकीविज्ञानस्य शिल्पविज्ञानस्य च उद्भवः संजातः। इत्थं विचार्य पाठकानां ज्ञानवर्धनार्थं प्राचीन–आधुनिकञ्च साहित्यस्य लेखाः अंकेऽस्मिन् समाविष्टाः सन्ति। इति।

**शकाब्दः १९४५**

भावत्कः
**डॉ. अरुणकुमारझा**
सचिवः

# पर्यवसानम्

डॉ. सुधाकरमिश्रः

आत्मा एव इदं सर्वम्[१], सर्वं खल्विदं ब्रह्म[२], अनादि निधनं ब्रह्मः[३] इत्यादिभिः श्रुतिवचोभिरवश्यमेव जगति किञ्चिदन्वेषणविषयो वर्तते यच्चास्माभिस्साधनीयः। तदर्थं वस्तुद्वयमपेक्षते कश्चनप्रारम्भः किञ्चित्पर्यवसानमिति। यद्यपि शब्दद्वयमपि परस्परसापेक्षं तथापि एकस्य श्रवणेऽपरस्य स्वयमेवोपस्थितिर्भवति। यद्यपि श्रवणे सामीप्यं प्रतिभाति परन्तु तथा सामीप्यं नास्ति यतो हि प्रारम्भस्य कदा प्रारम्भ परिसमाप्तेश्च कदा परिसमाप्तिस्तथा इयत्ता नास्ति। तथापि जनाः लौकिकं पक्षमधिकृत्य किञ्चित् व्यवहरन्ति परन्तु तन्नादरणीयमिति। यतो हि लौकिकारम्भपरिसमाप्त्योः न किञ्चित्तात्पर्यम्। तत्र गीता एव प्रमाणम् –

**''बहूनि मे व्यतीतानि जन्मानि तव चार्जुन''।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप।।**[४]
**पूर्वजन्मनि या विद्या पूर्वजन्मनि यद्धनम्।**
**पूर्वजन्मनि या नारी अग्रे अग्रे धावति।।**
**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।**
**न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति।।**[५]
**प्राप्यपुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते।।**[६]
**अथवा योगिनामेव कुले भवति धीमताम्।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्।।**[७]
**यदा यदैव कालेन धर्मग्लानिर्भविष्यति।**
**धर्मं संस्थापयिष्यामि ह्यवतारैस्तदा तदा।।**[८]
**अष्टाविंशे द्वापरान्ते स्वयमेव यदा हरिः।**
**उत्सारयेन्निजां मायां तत्प्रकाशो भवेत्तदा।।**[९]

---

१. छान्दोग्योपनिषद् ७.२५.२
२. छान्दोग्योपनिषद् ३.१४.१
३. वाक्यपदीयं ब्रह्मकाण्डे १.१
४. श्रीमद्भगवद्गीता ४/५
५. श्रीमद्भगवद्गीता ६/४०
६. श्रीमद्भगवद्गीता ६/४१
७. श्रीमद्भगवद्गीता ६/४२
८. श्रीमद्भागवतमहापुराणम् उत्तरमहात्म्ये ३/३०
९. श्रीमद्भागवतमहापुराणम् उत्तरमहात्म्ये ३/१०

सांख्ययोगन्यायमीमांसावैशेषिकवेदान्तादीनां दर्शनानामपि अनादिगताया: सृष्टे: प्रारम्भे पर्यवसाने च तात्पर्याभावात्। यद्यपि तत्राप्युत्पत्तिविनाशयो: वर्णनं मिलति परन्तु तद्वर्णनं कुत: कुत्रपर्यन्तमिति न स्पष्टम्। प्रकृतमनुसरामश्चेत् पर्यवसानशब्दे परि अव सोपसर्गक: ''षो अन्तकर्मणि''[१०] इति ण्युट्प्रत्यये तत्र सर्वप्रथमम् ''**हलन्त्यम्**''[११] इति सूत्रेण टकारस्येत्संज्ञा। '**तस्या लोप:**'[१२] इति सूत्रेण लोपे। ण्यु इति जाते। पुन: ''**चुटू**''[१३] इति सूत्रेण णकारस्येत्संज्ञायां सत्यां 'तस्य लोप:' इति सूत्रेण तस्यापि लोपे सति अवशिष्टं भवति '**युवोर्नाकौ**'[१४] इति सूत्रेण यो: स्थाने अनादेशे। '**अचोञ्णिति**'[१५] इति सूत्रेण वृद्धौ सति '**एचोऽयवायाव:**'[१६] इति सूत्रेण आवादेशे प्रातिपदिकसंज्ञायां विभक्तिकार्ये सति सिध्यति पर्यवसानमिति शब्द:। अत्र उपसर्गद्वयं परि अव इति। तत्र परि उपसर्गस्य नानार्थे शक्तिस्तथापि व्याप्तौ आच्छादने वा गृह्यते। अव इत्यस्य तु **निश्चयार्थे** व्यवहार:। आहत्य शब्दार्थस्तु इत्थं यत् सर्वान् व्याप्य निश्चितरूपेण अन्तप्राप्तिरेव। यद्यपि दार्शनिकदृष्ट्या यो हि आदि: सैवान्त:। यश्चान्त: सैवादि:। प्रोक्तञ्च वेदान्तदर्शने – तैत्तिरीयोपनिषदि '**तस्माद्वा एतस्मादात्मन आकाश: सम्भूत:**'...।[१७] '**यतो वा इमानि भूतानि जायन्ते**'[१८] **सदेवसोम्यदमग्र आसीत्**[१९] '**एतस्माज्जायते प्राणो मन: सर्वेन्द्रियाणि च**'[२०] '**अहं सर्वस्य प्रभवो मत्त: सर्व प्रवर्तते**'[२१] '**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्**'[२२]। तत्रैव वेदान्तसारे महाप्रपञ्चनिरूपणप्रसङ्गे लिखितमाचार्येण एतदुपहितं वै श्वानरादी श्वरपर्यन्तं चैतन्यमप्यवान्तरवनावच्छिन्नाकाश वदान्तरजलाशयगतप्रतिबिम्बाकाश वच्चैकमेव। आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यां तत्ताय: पिण्डवदविविक्तं सदनुपहितं चैतन्यं सर्वं खल्विदं ब्रह्म इति वाक्यस्य वाच्यं भवति[२३]। एवमेव अन्येष्वपि दर्शनेषु द्रष्टव्यम्।
व्याकरणशास्त्रस्यारम्भपरिकल्पना नन्दिकेश्वरकारिकात: स्पष्टीभवति यत् भगवान् शिवादेव प्रोक्तञ्च –

**नृत्तावसने नटराजराजो ननादढक्कां नवपञ्चवारम्।**
**उद्धर्तुकाम: सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥**[२४]
**अत्र सर्वत्र सूत्रेषु अन्त्यवर्णचतुर्दशम्।**
**धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये॥**[२५]

---

१०. धातुसंख्या ११४७ वैयाकरणसिद्धान्तकौमुदी
११. पा.सू.१.३.३
१२. पा.सू.१.३.९
१३. पा.सू.१.३.७
१४. पा.सू.७.१.१
१५. पा.सू.७.२.११
१६. पा.सू.६.१.७८
१७. तैत्तिरीयोपनिषद् २.१.१
१८. तैत्तिरीय ३.१.१
१९. छान्दोग्योपनिषदि ६.२.१
२०. मुण्डकोपनिषदि २.१.३
२१. श्रीमद्भगवद्गीता १०/८

**येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥**[26]

महामहिमनागेशोऽपि लिखितवान् लघुशब्देन्दुशेखरे यत् –

धात्वर्थं धातुमूलकशब्दशास्त्र प्रवृत्यर्थम्। अत एवं अनुबन्धाकरणार्थश्च वर्णानामुपदेशः इत्युक्तं भाष्ये। अत्र करणशब्दप्रयोगेणानुबन्धानां सादित्वं सूचितम्। तत्करणञ्चोपदेशकर्तृकर्तृकमेव। तेन तद् व्यतिरिक्तस्य सर्वस्यानादित्वं सूचितम्। अत्र सनकाद्युद्धरणेच्छयाऽस्य ब्रह्मोपदेशरूपत्वं सूचितम्। तच्च श्रुतित्वाभावे न संगच्छते। 'श्रोतव्यो श्रुतिवाक्येभ्यः' इत्युक्तेः। ऋक्तन्त्रे व्याकरणेऽपि शाकटायनोऽपि – इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाऽचार्या ऊर्चुर्ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्यः ऋषयो ब्राह्मणेभ्यस्तं खल्विदमक्षरसमाम्नायमित्याचक्षते न भुक्त्वा न नक्तं ब्रुयात् ब्रह्मराशि इति। ब्रह्मराशिरित्यस्य ब्रह्मप्रातिपादको वर्णराशिरिति[27] । तत्त्वञ्च नन्दिकेश्वरकाशिकायां स्पष्टम्। ब्रह्मराशिरित्थम् –

अइउण् **१.**, ऋऌक् **२.**, ए ओ ङ् **३.**, ऐ औ च् **४.**, ह य व र ट् **५.**, ल ण् **६.**, ञ म ङ ण न म् **७.**, झ भ ञ् **८.** घ ढ ध ष् **९.**, ज ब ग ड द श् **१०.**, ख फ छ ठ थ च ट त व् **११.**, क प य् **१२.**, श ष स र् **१३.**, ह ल् **१४.**[28]

नन्दिकेश्वरकाशिकायां निम्नलिखिताश्लोकाः ब्रह्मपरकाः सन्ति यथा –

**अ इ उ ण्**

**अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु ।**
**चित्कलामिं समाश्रित्य जगद्रूप उणी श्वरः ॥३॥**

**ऋ ऌ क्**

**ऋऌक् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत् ।**
**तामेव वृत्तिमाश्रित्य जगद्रुपमजीजनत् ॥१०॥**

**ए ओ ङ्**

**ए ओ ङ् मायेश्वरात्म्यैक्यविज्ञानं सर्ववस्तुषु ।**
**साक्षित्वात् सर्वभूतानां स एक इति निश्चितम् ॥१३॥**

**ऐ औ च्**

**ऐ औ च् ब्रह्मरूपः सन् जगत् स्वान्तर्गतं ततः ।**
**इच्छया विस्तरं कर्त्तुमाविरासीन्महामुनिः ॥१४॥**

**ह य व र ट्**

**भूतपञ्चक्रमस्तस्माद् हयवरट् महे श्वरात् ।**

---

२६. पाणिनीयशिक्षा 1
२७. लघुशब्देन्दुशेखरः संज्ञाप्रकरणम्
२८. पाणिनि-अष्टाध्यायी

व्योमवाय्वम्बुवह्न्याख्यभूतान्यासीत् स एवं हि ।।१५।।
हकाराद्व्योमसंज्ञञ्च यकाराद्वायुरुच्यते।
रकारद् वह्निस्तोयं तु वकारादिति सैव वाक् ।।१६।।

ल ण्

आधारभूतं भूतानामन्नादीनाञ्च कारणम्।
अन्नद्रेतस्ततो जीवः कारत्वाल्लणीरितम् ।।१७।।

ञ म ङ ण न म्

शब्दस्पर्शौ रूपरसगन्धाश्च ञ म ङ ण न म्।
व्योमादीनां गुणा ह्येते जानीयात् सर्ववस्तुषु ।।१८।।

झ भ ञ्

वाक्पाणी च झ भ ञ् आसीद्विराड् रूपचिदात्मनः।
सर्वजन्तुषु विज्ञेयं स्थावरादौ न विद्यते ।।१९।।

घ ढ ध ष्

घ ढ ध ष् सर्वभूतानां पादपायूपस्थकः।
कर्मेन्द्रियगणा ह्येते जाता हि परमार्थतः ।।२०।।

ज ब ग ड द श्

श्रौतत्वङ्नयनघ्राणजिह्वाधीन्द्रियपञ्चकम्।
सर्वेषामपि जन्तूनामीरितं ज ब ग ड द श् ।।२१।।

ख फ छ ठ थ च ट त व्

प्राणादिपञ्चकञ्चैव मनोबुद्धिरहङ्कृतिः।
बभूव करणत्वेन ख फ छ ठ थ च ट त व् ।।२२।।
वर्गद्वितीयवर्णोत्थाः प्राणाद्याः पञ्चवायवः।
मध्यवर्णत्रयाज्जा अन्तः करणवृत्तयः ।।२३।।

क पय्

प्रकृतिं पुरुषञ्चैव सर्वेषामेव सम्मतम्।
सम्भूतमिति विज्ञेयं कपय् स्यादिति निश्चतम् ।।२४।।

श ष स र्

सत्वं रजस्तम इति गुणानां त्रितयं पुरा।
समाश्रित्य महादेवः श ष स र् क्रीड़ति प्रभुः ।।२५।।

**श ष स र्**

**सत्वं रजस्तम इति गुणानां त्रितयं पुरा।**
**समाश्रित्य महादेवः श ष स र् क्रीड़ति प्रभुः ॥२५॥**
**शकाराद्रजसोद्भूतिः षकारात्तमसोद्भवः।**
**सकारात् सत्वसम्भूतिरिति त्रिगुंणसम्भवः ॥२६॥**

**ह ल्**

**तत्त्वातीतः परः साक्षी सर्वानुग्रहविग्रहः।**
**अहमात्मा परो हल् स्यामिति शम्भुस्तिरोदधे ॥२७॥**

किमधिकं कथयामः व्याकरणशास्त्रेऽपि प्रसिद्धोऽयं सिद्धान्तः यत् प्रयुक्तानामन्वाख्यानमिदं व्याकरणम्। अर्थात् वेदे लोके च प्रसिद्धा व्यवहृताः प्रयुक्ता ये शब्दाः तेषामेव व्याकरणशास्त्रेण संस्काराः क्रियन्ते। व्याकरणशास्त्रस्य संस्कारक्रमस्तू इत्थम् – सन्धिः, शब्दरूपप्रक्रिया, कारकविभाजनम्। समासपरिकल्पनम्। तिङन्तप्रक्रियानिरूपणम्, णिजन्तव्यवस्था पुनः स्वरादितत्त्वनिरूपणादयः पक्षाः लोचनलोचिताः भवन्ति। तत्रापि सर्वप्रथमं दार्शनिकचिन्तननिरूपणे अष्टौ स्फोटाः। तत्रापि वाक्यस्फोटेऽति निष्कर्षे तिष्ठतीति मतस्थितिः। तात्पर्यं वाक्यस्फोटस्यैव प्रामुख्यं वास्तविकत्वञ्च। अन्येषां सर्वेषां स्फोटानामवास्तवत्वबोधनात्। उदाहरणं यथा – देवदत्तः मन्दिरं गच्छतीति एकमखण्डं वाक्यम्। तत्र शास्त्रीयप्रक्रियां निर्वाहाय प्रकृतिप्रत्ययविभागः तत्तदर्थविभागः परिकल्पितो भवति। अनया रीत्या अत्र परिकल्पितांशे शास्त्रं कार्यं करोति। यथा प्रसिद्धमेकमुदाहरणं सुध्युपास्यः इति। अत्र पदद्वयं तत्र प्रथमं पदं सुधी पदम्। द्वितीयञ्च उपास्य इति। प्रथमस्य सिद्धिप्रक्रिया यथा सुष्ठु धीर्यस्य। सुष्ठु ध्यायति इति। सु उपसर्गपूर्वकात् ध्यै धातोः 'ध्यायतेः सम्प्रसारणञ्च' क्विप् प्रत्यये सति यकारस्य सम्प्रसारणे इकारे, 'सम्प्रसारणाच्च' इति सूत्रेण पूर्वरूपे, हलश्च इति सूत्रेण दीर्घे धीशब्दः। सुष्ठु ध्यायन्तीति सुधियः। सु शोभना धीर्येषामिति वा सुधियः। उपास्यः इत्यत्र उप उपसर्गात् आस्धातोः कर्मणि ऋहलोर्ण्यत् इति सूत्रेण ण्यत् प्रत्यये। एवमपि प्रकृतिप्रत्ययकल्पना प्राप्यते उप आस् ल्यप् इति। सुधीभिरुपास्य इति विग्रहे। पुनः 'कर्तृकरणे कृता बहुलम्' इति सूत्रेण तृतीयतत्पुरुषसमासे। अलौकिको विग्रहो यथा सुधी भिस् उपास्य सु। अत्र समासे सति कृत्तद्धितसमासश्च इति सूत्रेण प्रातिपदिकसंज्ञायम्। सुपो धातुप्रातिपदिकयोः इति सूत्रेण सुपो लुकि। सुधी उपास्य इति जाते। इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च इति सूत्रेण ह्रस्वे प्राप्ते। न समासे इति वार्तिकेन निषेधे। पुनः एकदेशविकृतन्यायेन प्रातिपकित्वमादाय सुधी उपास्य इति प्रातिपदिकसंज्ञायाम्। अस्यामवस्थायाम् इको यणचि इति सूत्रेण यण् प्राप्ते। तत्र इक् इत्युक्ते चतुर्णामुपस्थितिः, यत् इत्युक्ते चतुर्णामुपस्थितिः। इतोऽपि मूलप्रयोगेऽपि त्रयः इक्वर्णाः तत्र कस्य यण्कार्यं स्यात् इत्यादिविचारप्रसंगे अनियमे नियमकारिणी परिभाषा एतल्लक्षणविशिष्टं सूत्रद्वयमुपस्थितं भवति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'स्थानेऽन्तरतमः' इति। ताभ्यां परिभाषाभ्यां साहाय्येन

अच्व्यवहितपूर्वविशिष्टस्य इकः स्थाने यण् भवति। पुनः शङ्का भवति यत् वर्णसमाम्नाये अ इ उ ण् इत्यादि स्थले ह्रस्वेकारस्य पाठः तर्हि अत्र तु दीर्घेकारः कथं यण् स्यात् तदा एका परिभाषा प्रवृत्ति 'प्रत्याहारग्रहणे तद्वाच्यवाच्ये निरूढा लक्षणा' अनया परिभाषया इ इत्यनेन अष्टादशानां ग्रहणं सम्भवति। तेन दीर्घसत्वेऽपि न यणाभावः। इदानीं सु ध् य् उपास्य इति स्थिते। अत्र **'अनचि च'**[29] इति सूत्रेण द्वित्वे प्राप्ते तस्य **'स्थानिवदादेशोऽनल्विधौ'**[30] इति सूत्रेण स्थानिवद्भावात् यकारे अच्त्वधर्ममादाय द्वित्वनिषेधे प्राप्ते, तत्रैव द्वितीयांशेन अनल्विधौ इत्यनेन निषेधे। पुनः **'अचःपरस्मिन् पूर्वविधौ'**[31] इति सूत्रेण स्थानिवद्भावे प्राप्ते तस्य पुनः **'न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णनुस्वारदीर्घज श्चरविधिषु'**[32] इति सूत्रेण द्विर्वचनविधौ निषेधे पुनः द्वित्वं सिध्यति। **'झलां जश् झशि'**[33] इति सूत्रेण पूर्वधकारस्य दकारे सु द् ध् य् उपास्य इति स्थिते। संयोगान्तस्य लोपः इति सूत्रेण संयोगसंज्ञाविशिष्टस्य द् ध् य् इत्यस्य लोपे प्राप्ते पुनः तत्र परिभाषा प्रवर्तवे **'अलोऽन्त्यस्य'**[34] इति सूत्रेण अन्त्यस्य लोपे प्राप्ते तस्य यणः प्रतिषेधो वाच्यः इति वार्तिकेन निषेधे इतोऽपि नाना रूपेण द्वित्वादिकं विधाय धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि। एकधम्। एकमम्। द्विधम्। द्वियम्। द्विधम्। एकयम्। एकधम्। द्वियम्। इति सन्धिप्रक्रियाविश्लेषणम्। द्वितीयक्रमस्तु समासविश्लेषणम्। तृतीयक्रमे कारकविश्लेषणम्। सामान्येन प्रदर्श्यते कारकतत्त्वम्। अत्र सुधीभिः इत्यत्र तृतीयाबहुवचनविभक्तिः। सा तृतीयाऽपि नानाविधा। करणतृतीया। हेतुतृतीया। उपपदतृतीया। सम्बन्धतृतीया। इत्यादि। बहुप्रकारकेण विश्लेषणेन अत्र **'साधकतमं करणम्'**[35] इति सूत्रेण सुधी इत्यस्य करणसंज्ञायाम् अतः परं **'कर्तृकरणयोस्तृतीया'**[36] इति सूत्रेण तृतीयाविभक्तिर्भवति। सुधी इत्युक्ते अन्यपदार्थविशिष्टः कश्चन व्यक्तिः। तत्र करणं तावत् –

**क्रियायाः परिनिष्पत्तिर्यद् व्यापारादनन्तरम्।**
**विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥**[37]
**वस्तुतदनिर्देश्यं न हि वस्तु व्यवस्थितम्।**
**स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥**[38]

द्रव्यादिसाधारणं निर्व्यापारसाधारणञ्च हेतुतत्वम्। पदमधिकृत्य जायमाना विभक्तिरुपपदविभक्तिरिति। पुनस्तत्र प्रकृतिप्रत्ययविश्लेषणार्थं नाना पुस्तकानि रचितानि आचार्यैः। तत्र प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वं प्रकृवितत्वम्। प्रकृतिनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वं प्रत्ययत्वम्। तत्र प्रकृतित्वेन प्रातिपदिकानां, धातूनां, ग्रहण भवति। एवं प्रत्ययत्वेन सुप् तिङ् कृत् तद्धितादीनां ग्रहणं भवति। एतेषां प्रकृतिप्रत्ययानामुभयानाञ्च

२९. पा.सू.८.४.४७
३०. पा.सू.१.१.५६
३१. पा.सू.१.१.५७
३२. पा.सू.१.१.५८
३३. पा.सू.८.४.५३
३४. पा.सू.१.१.५२
३५. पा.सू.१.४.४२
३६. पा.सू.२.३.१८
३७. वाक्यपदीयं साधनसमुद्देशः९०
३८. वाक्यपदीयं साधनसमुद्देशः९१

वैयाकरणभूषणसारग्रन्थे वैयाकरणबृहन्मञ्जूषायां लघुमञ्जूषायां च विशेषरूपेण विवेचनं प्राप्यते। तत्र निर्धारितानि प्रकरणानि यथा – धात्वर्थप्रकरणम्, लकारार्थप्रकरणम्, सुबर्थप्रकरणम्, नामार्थप्रकरणम्, समासशक्तिप्रकरणम्, शक्तिनिर्णयः, नञर्थनिर्णयः, निपातार्थनिर्णयः, त्वादिभावप्रत्ययार्थनिर्णयः, देवताप्रत्ययार्थनिर्णयः, अभेदैकत्वसंख्यानिर्णयः, संख्याविवक्षानिर्णयः, त्तवाद्यर्थनिर्णयः, स्फोटनिर्णयः। तत्र धातुरित्युक्ते पाणिनि आचार्यमते सूत्र द्वयमुपस्थितं भवति। भूवादयो धातवः। सनाद्यन्ताधातश्च। तर्हि निष्कृष्टोऽर्थः भ्वादिगणपठितत्त्वे सति क्रियावाचकत्वे सति पाणिनिसंकेतसम्बन्धेन आनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वं धातुत्वम्। तत्रापि वैयाकरणमीमांसकनैयायिकवेदान्तिनां भेदेन धात्वर्थाः नानाविधाः। फलव्यापारयोः धातुः इति। फलमात्रं धातुरिति। व्यापारमात्रं धातुरिति। एते सर्वेऽपि पक्षाः तत्तच्छास्त्रेषु निरूपितास्सन्ति। पुनः प्रातिपदिकार्थनिरूपणप्रसंगे।

**एकं द्विकं त्रिकं चाथं चतुष्कं पञ्चकं तथा।**

**नामार्थ इति सर्वेऽपी पक्षाः शास्त्रे निरूपिताः॥**[३९]

**स्वार्थं द्रव्य च लिङ्ग च संख्याकारकमेव च ।**

**अमी पञ्चैव नामार्थाः त्रयः केषाञ्चिदग्रिमाः॥**[४०]

पुनः प्रत्यवयवं विचारपुरस्सरमन्तिमं प्रति गच्छति आचार्यः स च अन्तिमः पदार्थः स्फोटपदार्थः। यत्रापि बहवः पक्षा निरूपितास्सन्ति। यथा – वर्णस्फोटः पदस्फोटः वाक्यस्फोटः वर्णजातिस्फोटः पदजातिस्फोटः वाक्यजातिस्फोटः अखण्डपदस्फोटः अखण्डवाक्यस्फोटः इत्यादयः। अस्य स्फोटस्यापि महती विचित्रा स्थितिः। यतो हि वाक्यस्फोटप्रसङ्गे लिखति आचार्यनागेशभट्ट यत् 'अत्रेदं बोध्यम् – केनचित् घटमानयेति वेखरीनादः प्रयुक्तः, स केनचिच्छ्रोत्रेन्द्रियेण गृहीतः, स नाद इन्द्रियद्वारा बुद्धिहृद्गतस्सन्नर्थर्हबोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति तस्मादर्थबोधः, स्फुटत्यर्थोऽस्मादिति व्युत्पत्या स्फोटः । उच्चारयितुस्तु युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते, तत्र वैखरीनादो वह्न्यादेः फुत्कारादिवन्मध्यमानादोत्साहकः मध्यमानादः स्फोटं व्यञ्जयतीति शीघ्रमेव ततोऽर्थबोधः परस्य विलम्बेनानुभवसिद्धत्वात्। अत्र भाष्यमपि प्रमाणम् – श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः इत्याकरग्रन्थः संगच्छते। कत्वादिना श्रोत्रोपलब्धित्वं स्फोटात्मकपदादिरूपेण तु बुद्धिर्निग्राह्यत्वम् स स च प्रयोगेण वैखरीरूपेणाभिज्वलितः स्वरूपरूषितः कृत इति तदर्थः । तत्रापि शक्यत्वस्येव शक्ततावच्छेदिकाया वर्णपदवाक्यनिष्ठजातेर्वाचकत्वम्। तदुक्तम् –'अनेकव्यक्तयभिव्यङ्ग्या जातिः स्फोट इति स्मृता'[४१]। अत्रापि बहवः पक्षास्सन्तिः। यथा वर्ण कथं न स्फोटः । ध्वनिः कथं न स्फोटः लिपिः कथं न स्फोटः एकस्य स्फोटस्य सत्वे कथं तत्र क्रमः तर्हिः सर्वेषां आरोपमात्रमधिकृत्य उत्तरं दत्तमस्ति। बुद्ध्या च क्रमः आश्रीयते। एवं प्रकारेण यदि कश्चन एकमपि शब्दं जानाति तदा स स्वर्गलोकं मोक्षं वा प्राप्नोति। प्रोक्तञ्च –

---

३९. परमलघुमञ्जूषा कारकप्रकरण्
४०. तत्रैव
४१. वाक्यपदीयम् १/९३

एक: शब्द: सम्यग्ज्ञात: सुष्ठुप्रयुक्त: स्वर्गे लोके च कामधुग्भवति। सम्यग्शब्दप्रयोगेण ब्रह्मलोके महीयते।। व्याकरणशास्त्रस्य प्रारम्भ: चतुर्दशसूत्रात् परिकल्प्यते। तत: चतु:सहस्राणि सूत्राणि जातानि। तत्र नाना प्रकरणानि साधनानि च सिद्धानि। परन्तु सर्वं ज्ञात्वा यदा पुन: चतुर्दशसूत्राणां यथार्थज्ञानं भवति तदा एव तस्य शास्त्रस्य पर्यवसानं नान्यथेति।

**साधनानि** –

सर्वेषां शस्त्राणां कार्याणाञ्च केचन नियमा: भवन्ति। तानियमानधिकृत्यैव कश्चन् अग्रे गन्तुं शक्नोति। यथा वेदान्तदर्शनस्य साधननिरूपणप्रसङ्गे प्रोक्तमस्ति यत् अस्याङ्गानि यमनियमासनप्राणायामप्रत्याहार धारणाध्यानसमाधय:। तत्र अहिंसासत्यामस्तेयब्रह्मचर्यापरिग्रहा: यमा:। शौचसन्तोषतप: स्वाध्यायेश्वरप्रणिधानानि–नियमा:। करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीन्यासनानि। रेचकपूरककुम्भकलक्षणा: प्राणनिग्रहोपाया: प्राणायाम:। इन्द्रियाणां स्वस्वविषयेभ्य: प्रत्याहरणं प्रत्याहार:। अद्वितीयवस्तुन्यन्तरिन्द्रियधारणं धारण। तत्राद्वितीयवस्तुनि विच्छिद्यविच्छद्यान्तरिन्द्रियवृत्तिप्रवाहो ध्यानम्। समाधानं समाधि: सविकल्पकनिर्विकल्पकभेदात्। प्राय: उपरोक्तानि साधनानि सर्वेषां कार्याणां कृते प्रयुक्तानि भवन्ति। परन्तु तदपेक्षया सर्वेषां शास्त्राणां यत्किञ्चिद् विशिष्टं भवति।

१. व्याकरणदर्शने प्रोक्तमस्ति यत् माङ्गलिक आचार्यो महत: शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादित: प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते, वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्योताश्च वृद्धियुक्ता यथा स्युरिति। अनेन ग्रन्थारम्भे मङ्गलाचरणमावश्यकतम्।

२. सोऽयमक्षरसमान्मायो वाक्समान्माय: पुष्पित: फलित श्चन्द्रतारवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशि: सर्ववेदपुण्य फलावाप्तिश्चास्य ज्ञाने भवति मातापितरौ चास्य स्वर्गे लोके महीयते[४२]। यदि मङ्गलादिविशिष्टं कार्यं तदा एव तत्कार्यं सम्वर्धनं प्राप्नोति। नान्यथा।

३. प्रमाणभूत आचार्यो दर्भपवित्रपाणि: शुचावकाशे प्राङ्मुख उपविश्य प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राऽशक्यं वर्णेनाऽप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण।[४३] शुचिता महती आवश्यकी।

४. आचार्याचारात्[४४] आचार्याणां व्यवहारानुसारेणाध्येतव्यम्।

५. लोकव्यवहारात्। लोकस्यापि प्रमाणत्वेनादर: करणीय:।

६. उन्नता गुरुपरम्परा। विशिष्टागुरुपरम्परा अपेक्षते।

७. सकारात्मकचिन्तनशील:। सर्वत्रैव सकारात्मकता अपेक्षते। प्रोक्तञ्च सिद्धस्य गतिर्चिन्तनीया।

८. श्रद्धावन्त:। प्रोक्तञ्च श्रद्धावाल्लभते ज्ञानम्। गुरूपदिष्टवाक्येषु विश्वास: श्रद्धा।

---

४२. महाभाष्यम् १.१.१

४३. महाभाष्यम् १.१.१

४४. महाभाष्यम् १.१.१

**सारांशः –**

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः॥**[४५]
**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ।**[४६]

गच्छतीति जगत् इति लक्षणविशिष्टेऽस्मिन् संसारे नाना प्रकारकाः जनाः विचरन्ति। तत्र सर्वप्रथमं यस्य दर्शनं बाहुल्येन भवति ते भवन्ति व्रातीनाः जनाः। ते केवलं शारिरिकं कर्म कृत्वा जीवनं यापनं कुर्वन्ति। तेषां सर्वोत्तमा प्राप्तिर्भवति जीवने भोजनावासवासादीनामुपलब्धिरेव। द्वितीयतः जनाः किञ्चित् पठन्ति तदनुसारेण उपरोक्तानां प्राप्तिं कृत्वा अग्रे गच्छन्ति। तेषां जीवनं किञ्चिन्निर्मलं भवति। तृतीयतः कठोरज्ञानसाधनसम्पन्नानां जीवनं दृग्गोचरी भवति। प्रोक्तञ्च गीतायाम् –

**कायेन मनसा बुद्ध्या केवलैन्द्रियैरपि।**
**योगिनः कर्मकुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥**[४७]

केचन् विद्वांसः, कवयः लौकिकाः केवलं नित्यमेव शरीरेण मनसा विज्ञानेन पञ्चकर्मेन्द्रियैः पञ्चज्ञानेन्द्रियैश्च कार्यं साधयन्ति तेषामुद्देश्यं केवलं आत्मनः शुद्धिरेव। इतोऽपि केचन् एवमपि सन्ति यथा ऋषयः मर्हषयः साधकाः तपस्विनः, तेषां कथनमिदं यत् इदं जगत् स्वयमेव चलति। अस्य चालकः कश्चन् मनुष्यः प्राणी जीवो वा नास्ति। यथा जलं स्वयमेव चलति यथा वायुः स्वयमेव चलति यथा सूर्यः स्वयमेव तपति तथैव चन्द्रोऽपि स्वयमेव ह्रसते वर्धते च एवमेव दिनमाच्छति रात्रिर्गच्छति। तथैव रात्रिर्गच्छति दिनमागच्छति। इति स्वाभाविकं कर्म प्रोक्तञ्च गीतायाम् ––

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते॥**[४८]

तात्पर्यमिदं यत् अत्यन्तलौकिकानां जीवनमज्ञानादारभ्यते जीवने यच्चावश्यकं कर्म तत्कृत्वा पुनः तस्मिन्नेवाज्ञाने विलीनो भवति। परन्तु ज्ञानिनां जीवनं तथा नास्ति ते सांसारिकमावश्यकीभूतं सर्वमपि कुर्वन्तः पुनः तत् कर्म विस्मृत्य ज्ञानस्य यच्चान्तिमं लक्ष्यं तत्प्रति प्रवृत्ताः भवन्ति। परन्तु तेषां कर्मबन्धनमुत्पादयति मुक्तिं न ददाति यतो हि तत्रासक्तिर्भवति। प्रोक्तञ्च गीतायाम् –

**अयुक्तः कामकारेण फले सक्तो निबध्यते।**[४९]

---

४५. श्रीमद्भगवद्गीता ३/४२
४६. श्रीमद्भगवद्गीता ३/४३
४७. श्रीमद्भगवद्गीता ५/११
४८. श्रीमद्भगवद्गीता ५.१४
४९. श्रीमद्भगवद्गीता ५.१२

परन्तु यः सर्वमपि धर्मकर्मादिकं भगवन्तं अर्पयित्वा जीवनं चलति तत्र कापि बाधा न भवति संसारे जीवन्नपि स मुक्तो भवति। प्रोक्तञ्च –

**युक्तः कर्मफलं त्यत्तवा शान्तिमाप्रोति नैष्ठिकीम्।**[५०]

सर्वेषां शास्त्राणां दर्शनानां सामान्यानां दृश्यादृश्यानां च क्रियाशैली समाना एव। केवलं पार्थक्यं फले निष्ठायां स्थाने चिन्तने च भवति। कोऽपि कस्यापि कर्मणः सार्थकदिशि चिन्तनं करोति। कश्चिन च घातकपथि नयति।

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः।**
**ज्ञानाग्निदग्धकर्माणं तमाहु; पण्डितं बुधाः।।**[५१]

यस्य यतः प्रारम्भः पुनः तस्यैव ज्ञानपूर्वकप्राप्तिरेव पर्यवसामित्युच्यते।

**एसोसिएट प्रोफेसर**
**एस.एस.वी.ए.एस.एम, कोलकता,**
**ई-मेल-sudhakarmishra.vyakaran@gmail.com**

५०. श्रीमद्भगवद्गीता ५.१२

५१. श्रीमद्भगवद्गीता ४.१९

# भार्गवराघवीये राष्ट्रवादः

डॉ. लक्ष्मीकान्तषडङ्गी

**भूमिका –**

**'जननी जन्मभूमिश्च स्वर्गादपि गरियसी'**[१] इत्युक्त्यनुसारं सर्वेषां जनानां जननीव जन्मभूमिरपि अस्माकं सविधे सततं वन्द्या भवति। अतः कायमनोवाक्येन सर्वे देशवासिनः तेषां प्रियभूमेः संहतिं समृद्धिञ्च कामयन्ते। तामेव प्रियभावनां देशात्मबोधः, देशभक्तिः, देशप्रेमः, राष्ट्रवादः चेति कथ्यते। एतेषु 'राष्ट्रवाद' इत्यनेन राष्ट्रं प्रति प्रेमभाव एव बुध्यते। यत्रास्ते केवला ऐक्य-भावना। स्वराष्ट्रस्य भौगोलिके सांस्कृतिकसमाजे च प्रतिवसतां प्रति मानवानां मनसि प्रेमस्य ऐक्यतायाश्च भावनायाः जागरुकोऽस्ति राष्ट्रवादः। इयमेका इदृशी भावना या समग्रे विश्वे समग्रदेशवासिषु जनानां भावनारूपेण तिष्ठति। अस्यैव राष्ट्रवादस्य विकासः आधुनिकविश्वे राजनीतिकपुनर्जागरणस्य परिणामः भवति। संक्षेपेण उच्यते–**'राष्ट्रवादः कस्यापि विशेष-भौगोलिक-सांस्कृतिक-सामाजिकस्तरेषु प्रतिवसतां मनुष्याणां मध्ये एकतायाः भावना। इयं राष्ट्रवादी-भावना सदैव जनेषु प्रेमस्य ऐक्यतायाश्च संचालिका भवति।'**

**प्राचीनराष्ट्रवादः –**

भारतवर्षस्य वैदिककालः संगठनात्मकदृष्ट्या सुवर्णयुग आसीत्। यत्र महर्षिभिः कामना कृता–

**'संगच्छध्वम् संवदध्वम् संवो मनांसि जानताम्'।**[२]
**'माता भूमिः पुत्रोऽहं पृथिव्याः।'**[३]
**'अहं राष्ट्री संगमनी वसूनाम्।'**[४]
**'वयं राष्ट्रे जागृयाम पुरोहिताः'**[५] इत्यादिकम्।

वेदोपबृंह्णपरायणा अपि आहुः–**'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।'**[६] **'वसुधैव कुटुम्बकम्'**[७] च इति। इयं मानवमात्रस्य कल्याणकामना भारतस्यैव संस्कृतौ समुपलभ्यते। अत्रैव जनाः विश्वकल्याणकामनया कार्याण्यकार्षुः। अस्यैव देशस्य विदुषां सविधे उपविश्य जनाः चारित्र्यादिकस्य शिक्षामाप्नुवन्ति स्म। तथा चाहुः भगवान् मनुः –

**''एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥''**[८] इति।

१. वाल्मीकिरामायणम्
२. वैदिक संकलन, ऋग्वेदः १०.१९१.२
३. अथर्ववेदः १२/१/१२
४. ऋग्वेदः १०.१२५.३
५. यजुर्वेदः
६. सूक्तिरत्नावली,पृ.३५
७. हितोपदेशः १.११८.पृ.१५३
८. मनुसंहिता २.२०

अत्रैव आचार्याः शङ्कररामानुजवल्लभनिम्बार्कमध्वप्रभृतयः जगतः जनानाम् आत्मोद्धाराय परमशान्तये च आजीवनं निःस्पृहतया कार्याण्यकार्षुः।

**शोधसमस्या –**

परन्तु सम्प्रति भारतवर्षे उग्रातङ्कवादः, असहिष्णुता, मिथः ईर्ष्या असूया च बहुलतया दृश्यन्ते। एवमपि समाजे साम्प्रदायिकतावादः व्याधिरूपेण सम्प्रति विराजमानोऽस्ति। स्व-स्व-सम्प्रदायस्य महत्त्वं प्रचारयितुं जनाः हिंसामार्गमपि अवलम्बितुं नैव पश्चात्पदाः भवन्ति। सर्वेषाम् एषां आतङ्कवादीनां मूलं साम्प्रदायिकविद्वेष एव। वैदेशिकाः आतङ्कवादिनः निखिलं भारतदेशं तैस्तैरातङ्कैः कलुषयन्ति। केचन भारतीयाः नेतारोऽपि स्व-स्वार्थसिद्धये एतादृशमातङ्कं पुष्णान्त्येव। अतः साम्प्रतं समाजे उग्रवादः सन्त्रासवादः आतङ्कवादश्च देशस्य समुन्नतये प्रतिबन्धकाः भवन्ति। एतदर्थं केचन राष्ट्रभक्ताः देशसेवकाः बुद्धिजीविनः समाजसेविनश्च विविधोपायेन बहुधा च सततमेव स्वमतं समुपस्थापयन्ति। जनजागरणार्थं कवयः नाट्यकाराश्च अनुदिनं राष्ट्रवादात्मकानि काव्यनाटकानि रचयन्ति। यथैव भारतवर्षे यवनाक्रमणकाले चन्द्रगुप्तचाणक्यादीनां, मोहम्मदीयाक्रमणकाले पृथ्वीराजप्रभृतीनां, मुगलकाले महाराजप्रतापशिवाजीप्रभृतीनाम् आङ्गलसमये लक्ष्मीबाईमङ्गलपाण्डे-प्रभृतीनां ततः खुदिराममहात्मागान्धीनेताजीसुभाषप्रभृतीनां देशप्रेमिणाम् आत्मोत्सर्ग-देशभक्ति-प्रेम-निष्ठात्यागादिभिः दीर्घकालात् परं पराधीनरूपात् नागपाशात् मुक्ताभवत् अस्माकं भारतभूमिः, तथैव देशात् उग्रातङ्कस्य उन्मूलयितुं, देशवासिनां मनसि राष्ट्रभक्तिं जागरयितुं च संप्रति केचन राष्ट्रभक्तिपरायणाः कवयः स्वकीयकवित्वमहिम्ना काव्यनाटकगीतिकाव्यसंगीतानि रचयन्ति। सुप्राचीन-वैदिकयुगादारभ्य इयमेव काव्यरचना परम्परा निरवच्छिन्ना प्रचलिता। तेषु प्राचीनसंस्कृतकवीनां वाल्मीकि-व्यास-कालिदासप्रभृतीनां काव्यानि अपि सुविख्यातानि सन्ति। मध्ययुगेऽपि विशिष्टाः संस्कृतविद्वांसः मनोहराणि देशात्मबोधकानि काव्यानि रचितवन्तः। अत्याधुनिककालेऽस्मिनपि नैके संस्कृतकवयः काव्यानि विरच्य सहृदयानां श्रद्धाभाजो भवन्ति। यतोहि तात्कालिकसमाजस्य चित्राणि काव्यनाटकादिषु प्रतिफलितानि भवन्ति।

**भार्गवराघवीयस्य कविः –**

राष्ट्रवादमाश्रित्य एतादृशेषु आधुनिककाव्यकारेषु विंशशताब्द्यामाविर्भूतः महाकवि-रामभद्राचार्यः अन्यतमः। महाकविरयम् उत्तरप्रदेशीयः वास्तव्यः। बाल्यादन्धोऽपि महाकविरयं स्वीय-नैसर्गिकाद्भूतप्रतिभया इदानीं यावत् सप्तत्यधिकान् संस्कृतग्रन्थान् रचयति। स्वविलक्षणस्मृतिशक्त्या कविरसौ कठिनतमश्लोक-राष्ट्रभक्तिगीत-वीरगाथाच्छन्दांसि प्रभृतीनि नैकानि काव्यानि रचयन्ति।[९] कविरसौ सीतारामोपासकः आसीत्। अतोऽसौ श्रीरामचरितं परशुरामचरितं चावलम्ब्य एकविंशशताब्द्यां एकविंशतिसर्गात्मकं भार्गवराघवीयं नाम महाकाव्यं विरच्य महाकवित्वं प्राप्तः।[१०] न केवलमेवासौ महाकविः देशभक्तोऽपि। साम्प्रतिकसमाजे भारतवर्षस्य धर्मविहीनस्वरूपमवलोक्य दुःखाभिभूतः सन् देशस्यास्य वास्तविकादर्शं

९. मेरी स्वर्णयात्रा.पृ.१०३

१०. भार्गवराघवीयम्.पुरोवाक्.१०

रामराज्यस्वरूपमवलोकयितुं महाकवि: तस्य महाकाव्ये यतते। तद्यथा –

**''राष्ट्रवादस्तथा सेवा पीडितानामहैतुकी।**
**अध्यात्मभावना धर्मः सभ्यता चरित्र गुम्फिता।।''**[११]

**भार्गवराघवीये राष्ट्रस्वरूपम् –**

राष्ट्रवादपरायणा: श्रीरामकथाप्रवक्ता चासौ महाकवि: स्वराष्ट्रभक्तिं प्रकाशयन् स्वकीये भार्गवराघवीयाख्ये महाकाव्ये आह– **'रामो हि राष्ट्रः, राष्ट्रो हि रामः'**[१२] इति। अत: महाकाव्यस्यास्य दशमे सर्गे **'रामः'** इति शब्दस्य स्वरूपं प्रतिपादयन् कविना उक्तम्–

**'रामः स्वरूपं हि मनुष्यताया राष्ट्रस्य वै मङ्गलनामधेयम्'**[१३] इति

अर्थात् श्रीराम: अस्यैव राष्ट्रस्य मङ्गलं भवति। भगवान् श्रीरामचन्द्र: भारतवर्षस्य सूक्ष्मरूपो भवति। भारतवर्षमिदं भगवत: स्वरूपं भवति। स एव रामो हि केवलं युद्धि रावणं विनश्य त्रिषु लोकेषु शान्तिं संस्थापयितुं क्षम: नान्य:। यतोहि रावण: न केवलमात्रं व्यक्तिविशेष: अपितु असौ खलसंस्कृते: प्रतीकोऽस्ति। असौ समग्रदेवकलं तृणाय मत्वा प्राणिसमाजं पीडयति स्म। एतदर्थमुच्यते कविना–

**'न रावणो व्यक्तिविशेष एष प्रतीकभूतः खलसंस्कृतेश्च।**[१४]

अपि च–

**'विरावयन् रावण आर्तलोकान् तृणाय मत्वा विबुधान् बबाधे'**[१५] इति।

**भार्गवराघवीये राजनीतिस्वरूपम्–**

एवञ्चापि कवे: प्रवचने बहुशो श्रीरामसापेक्षराष्ट्रवादस्य सिद्धान्तं श्रोतुं प्राप्यते। अस्यैव कवे: धर्मसमन्वितराजनीतौ रुचि: परिलक्ष्यते। धर्मविहीनराजनीतिं कवि: **'विधवा'** इत्युक्त्वा राजनीतिविहीनं धर्मं कवि: **'विधुरः'** इति कथयति।[१६] संसारेऽस्मिन् कोऽपि जन: धर्ममन्तरेण जीवितुं नैव समर्थ:। धर्मस्य कवचं धारयित्वा एव जन: त्रिलोके जीवितुं समर्थ:। यथैवेयं धरित्री प्राणिनां पापक्षपणे क्षम: तथैव प्रसन्नमन: धर्मोऽपि प्रजावर्गं धारयितुं क्षम: नान्यथा। लोकेऽस्मिन् यदि सनातनधर्म: न स्यात् तर्हि भार्याभगिन्योरपि भेद: न स्यात्। पुनश्च कल्पलता–समाया: सृष्टे: आदौ प्रतिष्ठितामिमां मानवतां पापरूपस्य पशो: सकाशात् न कोऽपि रक्षितुं समर्थ: भवेत्। एतदर्थमुच्यते –

**''को नाम जीवेदनपेक्ष्य धर्मं जीवंस्त्रिलोक्यां धृतधर्मवर्मा।**
**धर्मः प्रजा धारयति प्रसन्नः क्षमेव पापक्षपणे क्षमोऽयम्।।''**[१७]
**''लोके न चेत् स्यात् यदि धर्म एष भार्याभगिन्योरथकाभिदा स्यात्।**

---

११. भार्गवराघवीयम्.पुरोवाक्.१५
१२. भार्गवराघवीयस्य समीक्षात्मकमध्ययनम्.पृ.१४
१३. भार्गवराघवीयम् १०.२३.पृ.१७३
१४. भार्गवराघवीयम् १०.२२.पृ.२७३
१५. भार्गवराघवीयम् १०.३३.पृ.२७५
१६. भार्गवराघवीयम् समीक्षात्मकमध्ययनम्.पृ.१४
१७. भार्गवराघवीयम्.१०.३३.पृ.२७५

**त्रायते कः कल्पलतामिवाद्यां पापात्पशोर्मानवताममोघः''**[१८]

**भार्गवराघवीये राष्ट्रप्रेम -**

श्रीरामचरितं श्रीरामराज्यं च सर्वैरभिप्रेतम्। अतः भारतवर्षे रामराज्यस्य सुप्रतिष्ठार्थं महाकवि-रामभद्राचार्यः सम्पूर्णभारतस्य समग्रविश्वस्य च नैकेषु देशेषु श्रीरामकथायाः मन्दाकिनीं तथा चान्यान्यभक्तिग्रन्थानां सरस्वतीं हिन्दुजनसमाजस्य कल्याणाय प्रचारयति। न केवलं भारतवर्षे, विदेशेष्वपि महाकविः भारतीयार्षग्रन्थानां सनातनसिद्धान्तं तथा च भगवतः श्रीरामस्य आदर्शं विलक्षणरीत्या प्रचारयति। पुनश्च प्रवासिभारतीयानां श्रीरामकथां भारतीयसंस्कृतिं च प्रति अनन्यनिष्ठाजागरणार्थं कविरसौ सततं यतते। १९९२ तमे खष्टीयाब्दे अन्तर्राष्ट्रीय-रामायणसम्मेलने स्वानुभूतिं स्वरचितं 'चन्द्रशेखरचरितम्' इति ग्रन्थे एवं प्रकाशयति यत् -

**''दृष्टं विधात्रा न विभर्ति साम्यम्, जगत्समग्रं किल भारतस्य।**
**तद् भारतान्न्युनमनेन चक्रे नेमाक्षरं नूनममुष्य नाम।।''**[१९]

अस्यार्थः यदा ब्रह्मा दृष्टवान् यत्, समग्रं जगदिदं भारतस्य साम्यं नैव विभर्त्ति, तदा भारतात् अर्धाक्षरं न्यूनं संसारस्य नाम 'जगत्' इति कृतवान्। अनेन महाकवेः जन्मभूमिं प्रति अनन्यनिष्ठायाः परिचयमपि प्राप्यते। न केवलमेतत् अपि तु महाकवेः संस्कृतसंस्कृतितत्त्वं, शास्त्रचिन्तनं चानुपममित्यिनुभूयते। कवेरनेनानुपमकृतित्वेन न केवलमात्रं जनसमाजस्य कल्याणसाधनं जायते, अपि च जनसमाजेन साकं शाशकवर्गाणामपि हितसाधनं भवति। एतदतिरिच्य समग्रजगतः निःसहाय-विकलाङ्गानां सर्वाङ्गीणविकासार्थं महाकविः सर्वदैव तत्परोऽभूत्। **'परोपकाराय इदं शरीरम्'** इति वचनं मनसि विधाय कविरसौ आत्मसुखं विहाय विकलाङ्गान् सेवते। समग्रविश्वस्य दीनहीनविकलाङ्गान् आत्मनिर्भरशीलान् कर्तुं विश्वे स्वीयरीत्या प्रथमविकलाङ्गविश्वविद्यालयं संस्थापयति। एतदर्थं रामभद्राचार्यः स्वस्य धार्मिकजगतः प्राप्तदक्षिणास्वरूपमर्थम् एकत्रीकृत्य तत्कालीन मुख्यमन्त्रीराजनाथसिंहस्य सहयोगेन च विश्वविद्यालयमिमं प्रतिष्ठापयति। अत्रैव नानाविषयाणां साम्प्रतिकानामध्यापनार्थं महत् सौविध्यं कृतवानपि संस्कृतस्य स्नातकोत्तरकक्षायाम् अध्ययनार्थं बहु सौविध्यं कृतवान्। अत्रैव रामभद्राचार्यः चतुष्प्रकारकाणां विकलाङ्गानां कृते निःशुल्कशिक्षाव्यवस्थां कारयति। एतदतिरिच्यापि विकलाङ्गच्छात्राणां भोजनम् आवासम्-शिक्षोपयोगिसमग्रसाधनादीन् कविः निःशुल्कं कारयति। समग्रविश्वस्य दीनहीनविकलाङ्गान् आत्मनिर्भरशीलं कृत्ते कविः इदानीं यावत् आत्मनः सफलप्रयासम् अविच्छिन्नाधारया चालयति।[२०] यतो हि महाकवेः अयमेवाभिप्रायः यत् मनुष्यजन्मात्रेण न केवलमेव जीवस्य किमपि साफल्यं भवति। साफल्याय कर्मसमुच्चयस्यापि अवश्यमेव प्रयोजनम् अस्ति। तेषु कर्मसमुच्चयेषु परोपकारः समाजसेवा निःस्वार्थरूपेण विकलाङ्गपोषश्च अन्यत्तमाः। एतदर्थं यथार्थेणोच्यते महाकविना -

---

१८. भार्गवराघवीयम्.६.३.४.पृ.१२६
१९. मेरी स्वर्णयात्रा.पृ.८५
२०. भार्गवराघवीयस्य समीक्षात्मकमध्ययनम्.पृ.१४

**'न जातमात्रेण हि कार्यसिद्धिरपेक्षते कर्मसमुच्चयोऽपि।**
**सुबीजमालापि मृदम्बुमुक्ता प्रभुः प्ररोहाय किमङ्कुरस्य।'**[२१]

अपि च –

**'परोपकारः सुसमाजसेवा निःस्वार्थरूपेण विकलाङ्गपोषः।**
**ततस्तपस्तप्तशरीरयष्टिर्विप्रो विपश्चिद्भगवन्तमेति॥'**[२२] इति।

एवं महाकवि रामभद्राचार्यः स्वाध्यात्मिकजीवनं मानवसमाजस्य कल्याणाय नियोजयति। भगवतः श्रीरामचन्द्रस्य भगवतः श्रीकृष्णस्य च दिव्यकथामृतप्रचारमाध्यमेनाऽसौ मनुष्यसमाजं सन्मार्गप्रदर्शयितुं सततं चेष्टते। एतदर्थं स्वजीवनस्य प्रतिक्षणमसौ मानवतायाः रक्षणे, हिन्दुत्वनिष्ठायां, भारतीयार्षग्रन्थानां प्रतिष्ठायां चात्मानं नियोजयति। साम्प्रतिककालेऽपि भारतवर्षस्य नैके राष्ट्रनेतारः कवेः मार्गदर्शनेन तस्यानुगृहीताः सन्तः भारतीयहिन्दुसंघटने अहर्निशं कार्यं कुर्वन्ति। विगतानेकवर्षेषु कविः समग्रभारतवर्षस्य विश्वस्य च नैकेषु देशेषु श्रीरामकथामन्दाकिनीं श्रीकृष्णकथाकालिन्दीं तथाचान्यन्यभक्तिग्रन्थानां सरस्वतीं कविरयं भारतीयार्षग्रन्थानां सनातनसिद्धान्तं भगवतः श्रीरामचन्द्रस्यादर्शं च विलक्षणदृष्ट्या प्रचारयति। संप्रति श्रीरामचन्द्रस्योपासना, शास्त्रचिन्तनं च कवेः जीवनस्य प्रमुखाङ्गानि भवन्ति।[२३]

**भार्गवराघवीये वर्णाश्रमव्यवस्था** –

वर्णव्यवस्थामनुसृत्य अस्पृश्यतादोषेण संप्रति समाजः समाक्रान्तः। स्वामिना विवेकानन्देन एतस्य निन्दा कृता। अद्यास्माकं धर्मः पथभ्रष्टः। स्वस्वयोग्यतानुसारमेव वर्णव्यवस्था समेषाम् उपकारायैव, न तु परस्परविद्वेषाय। वस्तुतस्तु सर्वभूतेषु एकमेव ब्रह्म विराजते। अतः सर्वे एव समानाः। एतदजानतः अज्ञानाच्छन्नाः जनाः **'मां न स्पृश मां न स्पृश'** इति कथयन्ति। एतद्द्वारा समाजस्य सङ्गतिर्भवति विध्वस्ता। अतः सर्वभूतेषु ब्रह्मदर्शनं कुर्वन्तः सर्वे तादृशमस्पृश्यतादोषं वर्जयेयुः। एतदर्थं महाकविना रामभद्राचार्येणोच्यते –

**''वर्णव्यवस्था विगतानवस्था वेदात्मना सा नु मयैवसृष्टा।**
**एतां जिहासन्! नहि शान्तिमेति दन्दह्यते मे किल कोपवह्नौ॥''**[२४]

अपि च–

**''न कर्मणा सा किल जन्मनैव तथा हि यायात् विपुलानवस्थाम्।**
**जन्मापि तत्पूर्वशरीरकर्म फलानुगं राजति जीवलोके॥''**

---

२१. भार्गवराघवीयम्.६.२०.पृ.१२३
२२. भार्गवराघवीयम्.६.३०.पृ.१२५
२३. भार्गवराघवीयस्य समीक्षात्मकमध्ययनम्.पृ.२८
२४. भार्गवराघवीयम्.६.३०.पृ.१२५

पुनश्च–

**“ लाभाय जातिर्नतु जातिवादो वर्णाभिमानोऽपि लसद्धिषादः।**
**सनिर्विवादो विलसत्प्रसादः सनातनो वैदिक धर्म एकः॥ ”**[२५] इति।

अत्र महाकवेरयमेवाभिप्रायः यत् वर्णाश्रमव्यवस्थायां कोऽपि अनवस्थादोषः नास्ति। इयं हि वर्णव्यवस्था वेदस्वरूपस्य ईश्वरस्य खलु सृष्टिः। अस्याः परित्यागेन जनः न शान्तिमेति, प्रत्युत भगवतः क्रोधाग्नौ भस्मीभवेत्। वर्णव्यवस्था नैव कर्मणा, इयं तु जन्मनैव जायेत। अन्यथा अत्र तु अनवस्था दोषः स्यात्। यतो हि जन्मेदं पूर्वजन्मकर्मफलम् अनुगच्छति। जातिव्यवस्था वर्णव्यवस्था वा सततं नः हि लाभाय न तु जातिवादाय। अत्र तु कदापि वर्णाभिमानं नोचितम्। यतो हि सनातनः वैदिकधर्मस्तु एक एवास्ति।

**निष्कर्षः–**

एवं राष्ट्र वादपरायणः महाकविः श्रीरामभद्राचार्यः साम्प्रतिकेऽस्मिन् भारतप्रदेशे पुनरपि रामराज्यस्य सुप्रतिष्ठार्थं स्वकीये भार्गवराघवीयाख्ये महाकाव्ये प्रयत्नशीलः परिदृश्यते। महाकाव्यस्य परिशीलनेन ज्ञायते यत् अस्माकं राष्ट्रभक्तिः तदैव सफला भवेत् यदा अस्माकं भावनासु **‘रामो हि राष्ट्रः, राष्ट्रो हि रामः’** इति मन्त्रः स्यात्। न केवलं भावनासु लिखनेषु वा, अपि तु एतदर्थं प्रजातन्त्रात्मकेऽस्मिन् भारते समुचिताधिकारप्रयोगेण, राजकीयकरदानेन, परोपकारेण, समाजसेवया, स्वदेशीयवस्तुप्रयोगेण, स्वार्थपरत्यागेन, परार्थग्रहणेन, निःसहायसेवया, शिक्षाप्रसारेण सदाचारविस्तारेण च राष्ट्रदेवोऽपि भवितुमर्हति। यदा वयम् एवम् आचरयिष्यामः तदैव भारतः समुन्नतिशिखरे समासीनो भविष्यति। तदैव इयमुक्तिः चरितार्था भविष्यति–

**“गायन्ति देवाः किल गीतकानि धन्यास्ते भारतभूमिभागे।**
**स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात्॥”**[२६]

इति दिक्।

**सहायकग्रन्थसूची–**


**( १ ) वैदिकसंकलन, भवानीप्रसाद तारकनाथद्य, संस्कृतवुक्डिपो, कोलकाता**

**( २ ) भार्गवराघवीयम्–रामभद्राचार्यः, जे.आर.एच. विश्वविद्यालयस्य, चित्रकूटः, उत्तरप्रदेशः ।**

**( ३ ) मेरी स्वर्णयात्रा–रामभद्राचार्यः, श्रीतुलसीमण्डलः, गाजियाबादः ।**

**( ४ ) सूक्तिरत्नावली–कुलमणिशर्मा, राधारमणप्रेस्, कटक, उत्कलः ।**


---

२५. भार्गवराघवीयम्.६.३२.पृ.१२५

२६. प्रकीर्णश्लोकाः.पृ.३१

( ५ ) भार्गवराघवीयस्य समीक्षात्मकमध्ययनम्- लक्ष्मीकान्तषडङ्गी, साहित्यविभागः, एस.जे.एस.वी.पुरी

( ६ ) वाल्मीकिरामायणम् गीताप्रेस्, गोरखपुर, उत्तरप्रदेशः ।

( ७ ) मनुसंहिता-मानवेन्दुवन्द्योपाध्यायः, संस्कृतपुस्तकभाण्डारः, कोलकाता ।

( ८ ) हितोपदेशः ( मित्रलाभः ) अशोककुमारवन्द्योपाध्यायः, सदेशः, कोलकाता ।

( ९ ) वैदिक-साहित्येर-इतिहास-प्रद्योतकुमारवन्द्योपाध्यायः, ढाका स्टुडेण्टस् लाइब्रेरी, कोलकाता ।

( १० ) वैदिक-साहित्येर-इतिहास-सुशान्तकुमाररागः, रा. संस्कृत संस्थानम्, श्रीसदाशिवपरिसरः, पुरी, उड़ीसा प्रदेशः ।

**संस्कृत विभागाध्यक्षः, मोगदा सत्संग**

**पालपाडा, महाविद्यालयः, पूर्वमेदिनीपुरम्, पश्चिमबङ्गः**

Email - ls.sanskrit.yspm@gmail.com

# वैदिक संस्कृति क्षेत्रे नारीणां योगदानम्
# अथर्ववेदे स्त्रीरोग तथा आरोग्यविषये स्त्रीदेवतां योगदानम्

**वैद्या सरोजमधुकरः तिरपुडे**

अथर्ववेदे आरोग्यविषये सहाय्यकर्तुं नैका देवतां योगदानम् अस्ति। ताः मनुष्यप्राणिमात्राणाम् संकटकाले व्याधिनाशं कर्तुं, रोगात् रक्षणं कर्तुं, सहायका अभवन्। तासाम् उल्लेखनीयं योगदानम् कार्यं अस्ति पुषादेवतां, अप्सरासमूहदेवतां, चंद्रमादेवतां वा योनिदेवतां, जरिमादेवतां, योषित् वा लोहवासस् देवतां, इन्द्राणिदेवतां, मातृनामादेवतां, द्यावापृथिवीदेवतां, सरस्वतिदेवतां, मेधादेवतां, राष्ट्रदेवी वाक्देवतां।

अथर्ववेदस्य काले तस्याः कार्य अतीव महत्त्वपूर्णं जायते। शरीरे नैकानि व्याधयः संभवन्ति तत्समये स्त्रीपुरुषाणां योग्यं मार्गदर्शनं कृत्वा ताः सहाय्यं अकुर्वन्। अती कठिनं समये, संकटकाले ओषधयः योजयित्वा रोगनाशं अकुर्वन्। योग्यं दिशां दर्शयित्वा पापात् मुक्तं कर्तुं सहाय्यं अकुर्म। यथा अष्टम काण्डे षट् सूक्ते गर्भदोषनिवारण सूक्ते ऋषी तथा देवता मातृनामा अथवा मंत्रोक्त अस्ति। (मातृनामक वा मातृगुणयुक्त नारी) एतत् सूक्ते गर्भस्थ सुरक्षा तथा तस्य पोषणं कथं जायते इति ज्ञायते। गर्भाशयस्य नाना रोगाः तथा कृमि, विषाणवः एवं तेषां निवारक ओषध प्रयोगस्य वर्णनं अस्ति। सा दुर्णामा (दुष्ट नाम यस्य सः), आलिंश (यः शक्तिक्षयं करोति), वत्सपः एतानि कृमिभ्यः बालकानां रक्षणं करोति। पलाल, अनुपलाल, शर्कु, कोक, मलिम्लुच, पलीजक, आश्रेष, वविवास, ऋक्षग्रीवा, प्रमीलिन आदयोः राक्षसयोः सा दूरम् करोति । दुर्नाम नामक रोगस्य निवारक 'पिंगवज' औषधम् प्रयोज्यति । कृष्णः केश्यसुर, स्तंम्बज, तुण्डिकः आदयोः अपि सा नष्टं करोति। अनुजिघ्र, प्रमृश, क्रव्याद, रेरिह, किष्कण् सर्वासाम् ओषध्या नष्टं करोति।[1]

चतुर्थकाण्डे विंशति सूक्ते पिशाचक्षयण सूक्ते ऋषी तथा देवता मातृनामा अस्ति। एतत् सूक्ते सा मातृनामा अर्थात् दिव्यदृष्टि वयं पश्यति, अति दरपर्यन्तं पश्यति। विशेष कोणेन पश्यति। समग्र रूपेण पश्यति।

---

**अथर्ववेद संहिता भाग-१**
**लेखक, संपादक-वेदमूर्ति तपोनिष्ठ पं.श्रीरामशर्मा आचार्यः**
**प्रकाशक-ब्रह्मवर्चस्, शान्तिकुन्ज, हरिद्वार**
**पंचम् आवृत्ति**
**मुद्रक-युगान्तरा चेतना प्रेस**
(१) काण्ड—८
६) गर्भदोषनिवारण सूक्त पृष्ठ क्र. १७
२१५३) "यौ ते मातोन्ममार्ज ...... वत्सपः ।। १ ।।"
२१५४) "पलालानुपलालौ ..... प्रमीलिनम् ।। २।"
२१५५) "मां सं वृतो ..... दुर्णामचातनम् ।। ३ ।।"

सा द्युलोक, अंतरिक्ष एवं पृथ्वीं सर्वान् पश्यति। अर्थात् सर्वप्रकारेण अस्माकं रक्षणं करोति।[२]

चतुर्थकाण्डे षडविंशति सूक्ते पापमोचनसूक्ते ऋषी मृगार अस्ति। देवता द्यावापृथिवी अस्ति। एतत् सूक्ते ये द्यापृवाथिवी द्वे देवता स्तः। ते मनोहर भोगयोः तथा समान विचारं धारणं कुरुतः। सर्वे ताम् प्रार्थनां कुर्वन्ति। ते मनुष्यस्य वैभवस्य मूल कारणं भवतः। ते अतिविस्तृतः तथा अतिगंभीरः स्तः। ते समस्त प्राणिनां आश्रयस्थानं स्तः। ते सर्वासाम् सुखदायीं भूत्वा सर्व पापानां मुक्तिं कुरुतः। ते प्राणिनां कष्टनाशं कुरुतः। क्रान्तदर्शी ऋषयः तयोः नमनं तथा आवाहनं कुर्वन्ति। ते सर्व गाः तथा वनस्पत्यः पोषणं कुरुतः। ते प्राणिनां अमरत्वरूप जल तथा हविष्यान्नं धारणं कुरुतः। तेषां समस्त विश्वं निवासं कुरुतः ।[३]

चतुर्थकाण्डे त्रिंशतसूक्ते राष्ट्रदेवी सूक्ते ऋषी अथर्वा अस्ति। देवता सर्वरुपा, सर्वात्मिका, सर्वदेवमयी वाक् अस्ति। सा रुद्रगण एवं वसुगणैः सह भ्रमणं करोति। सा आदित्य गण, सर्व देवाः सह वासं करोति। सा मित्रावरुण, इंद्र, अग्नि तथा अश्विनौ सर्वान् धारणं करोति। प्राणिनां यः जीवनीशक्ति, दर्शनक्षमता, ज्ञानश्रवणसामर्थ्य तथा अन्नभोगसामर्थ्य अस्ति तानि सर्वानि वाग्देव्या सहयोगे वयं प्राप्नुवन्ति ।[४]

चतुर्थकाण्डे अष्टत्रिंशतसूक्ते वाजिनीवान् ऋषभसूक्ते ऋषी बादरायणी अस्ति। देवता अप्सराः सन्ति। ताः उद्भेदन (शत्रु उच्छेदन) वा ग्रन्थि, अर्बुदस्य भेदनं कुर्वन्ति । विजयीं कुर्वन्ति अतः अधिष्ठात्रयः देवतां अप्सरां ऋषयः आवाहनं कुर्वन्ति ।[५]

प्रथमकाण्डे एकादशसूक्ते नारीसुखप्रसूति सूक्ते ऋषी अथर्वा अस्ति। देवता पूषा अस्ति। एतत् मंत्रे पूषादेवता सुखप्रसूतिहेतोः स्त्रीयां साहाय्यं करोति। स्त्रीयां सावधानपूर्वक अवयवान् प्रसूतिहेतोः योग्यं करोति। अतः पूषा देवतां ऋषी तस्य हविः समर्पितं करोति। यथा चतस्त्रो द्युलोकः चतस्त्रो भूम्यां आवृत्तः करोति तथा दिव्य पंचभूतानि गर्भं आवृत्तः कुर्वन्ति। पूषादेवता तम् मुक्तिं ददाति। सा मार्गं विस्तारपितुम् साहाय्यं करोति।

---

(२) काण्ड–४
२०) पिशाचक्षयण सूक्त पृष्ठ क्र. २३
७५१) "आ पश्यति...... पश्यति ।।१।।"
७५५) "आविष्कृणुष्व ......किमीदिनः ।।५।।"
७५६) "दर्शय मा ...... ओषधे ।।६।।"

(३) काण्ड– ४
२६) पापमोचनसूक्त पृष्ठ क्र.३०
७६५) "मन्वे वां द्यावापृथिवी....मुञ्चतमं हसः ।।१।।"
७६६) " प्रतिष्ठे....... मुञ्चतमं हसः ।। २ ।।"
७६७) "असंतापे....... मुञ्चतमं हसः ।। ३ ।। "
७६८) "ये अमृतं ....... मुञ्चतमं हसः ।। ४।। "

काण्ड–४
३०) राष्ट्रदेवी सूक्त पृष्ठ क्र.३४
८२३) " "अहं रुद्रेभिर्व............मश्विनोमा।। १।। "
८२४) " अहं राष्ट्री..... भूर्यावेशयन्तः ।। २ ।।"
८२५) " अहमेव......... सुमेधाम् ।। ३।।"
८२६)" मया सोऽन्नमत्ति........ वदामि ।। ४ ।।"

(५) काण्ड–४
३८) वाजिनीवान्ऋषभ सूक्त पृष्ठ क्र.४४
८६०) "उद्भिन्दतीं.......हुवे ।।१।।"

गर्भं अधोमार्गे गमने प्रवृत्तं करोति। सा जरायु या गर्भं गर्भाशये आवेष्टितं करोति सा पूर्णरूपेण अनन्तरे शरीरस्य बहिः करोति। सा सर्वरूपेण प्रसूतिकाले सहायकं भवति। अतः सर्वे ताम् हविः समर्पयन्ति।

**"वषट् ते पुषन्नस्मिन्त्सूतावर्यमा होता कृणोतु वेधाः ।**
**सिस्रत्रतां नार्यृतप्रजाता वि पर्वाणि जिहतां सूतवा उ ॥१॥"**

संपूर्ण विश्वस्य पोषणकर्ता!, श्रेष्ठजनस्य हितैषि पूषा देवतां ऋषयः तेषां हविः समर्पितं कुर्वन्ति।[६]

तृतीयकाण्डे त्रयोविंशतिसूक्ते विरप्रसूतिसुक्ते ऋषी ब्रह्मा अस्ति। देवता चंद्रमा या योनी अस्ति। एतत् मंत्रे स्त्रीयां वंध्यत्वनाश हेतोः चंद्रमा या योनीदेवतां साहाय्यं कर्तुं आवाहनं कुर्वन्ति। सा देवता गर्भाशये गर्भस्थापनकार्ये साहाय्यं करोति। दश मासम् गर्भं गर्भाशये स्थित्वा विरपुत्रम् उत्पन्नं कर्तुं साहाय्यं करोति। ओषधयः पिता द्युलोकः अस्ति, माता पृथ्वी अस्ति गर्भस्य वृद्धि कर्तुं साहाय्यं करोति। दिव्य पुत्रलाभस्य हेतोः विशेषरुपेण रक्षणम् करोति।

**"येन वेहद् बभुविथ नाश्यामसि तत्त्वत् ।**
**इदं तदन्यत्रत्वदप दूरे नि दध्मसि ॥१॥"**

हे स्त्री! येन पापेन वा पापजन्य रोगकारणेन त्वं वन्ध्यां भवसि, तं रोगं वयं नाशं कुरुमः। अयम् रोगः पुनः न भविष्यति अतः तं वयं दूरम् कुर्मः।[७]

तृतीयकाण्डे अष्टाविंशतिसूक्ते पशुपोषणसूक्ते ऋषी ब्रह्मा अस्ति। देवता यमिनी अस्ति। अधोलिखित मंत्रे युगल संतान दोषनिवारण हेतोः यमिनी देवतां विनतीं अकुर्वन्। एतत् सूक्तस्य ऋषी ब्रह्मा अस्ति। देवता यमिनी अस्ति। यमिनी देवतां नियामक शक्ति अपि मन्यते। सा अंतः बाह्यः प्रकृतं करोति। सा सर्वेषां प्रति कल्याणकारी भवेयुः इति प्रार्थनां अपि अकुर्वन्।

---

(६)
काण्ड – १
११) नारीसुखप्रसूति सूक्त.....पृष्ठ क्र. ८
४६) "वषट् ते पुषन्नस्मिन्त्सूतावर्यमा होता कृणोतु वेधः ।
सिस्त्रतां नार्यृतप्रजाता वि पर्वाणि जिहतां सूतवा उ ।।१।।"
५०) "चतस्त्रोदिवः........सूतवे ।।२।।"
५१) "सूषा...... विष्कले सृज ।।३।।"
५२) "नेव मांसे........ जरायु पद्यताम् ।। ४।।"
(५३) "वि ते भिनद्धि....... जरायु पद्यताम् ।। ५।।"
५४) "यथा वातो...... जरायु पद्यताम् ।। ६।।"

(७) काण्ड–३
२३) विरप्रसुतिसूक्त पृष्ठ क्र. २६
(५२८) ''येन वेहद् बभुविथ नाशयामसि तत् त्वत् ।
इदं तदन्यत्रत्वदप दूरे नि दध्मसि ।।१।।"
५२६) ''आ ते योनिं ..... दशमासस्य ।।२।।''
५३३) "यासां द्यौष्पिता ......प्रावन्त्वोषधयः ।। ६।।"

यत्र एकेकं एकत्रित कृत्वा सृष्टिं भवति, तत्र पदार्थस्य सृजनेन विश्वरुपा गौः सृजनं अकुर्वन्। इहलोके यमिनी (नियामक प्रकृति) ऋतुकालस्य भिन्न परिणामं उत्पन्नं करोति तत् काले सा पीडां ददाति, कष्टं ददाति, तथा पशुनाशं करोति।[८]

प्रथमकाण्डे सप्तदशसूक्ते रुधिरस्त्रावनिवर्तनधमनीबन्धनसूक्ते ऋषी ब्रह्मा अस्ति। देवता योषित् अस्ति। योषित् वा लोहवासस्देवतां प्रार्थनां अकरोत्। सा शरीरावयव भग्नसमये लोहितं धमन्योः बहिः निर्गच्छति तम् रोध्यति। यदि रुग्णस्य शरीरात् अतिमात्रेण रुधिरं वहति तेन सः रुग्णस्य संज्ञानाशः भविष्यति। तस्य मृत्युं अपि भविष्यति। अतः रुधिरस्त्राव स्तंभनं अतिमहत्वपूर्ण कार्यं अस्ति। अत्र योषितदेवता साहाय्यं करोति।[९]

द्वितीयकाण्डे अष्टाविंशति सूक्ति, दिर्घायुप्राप्ति सूक्ति ऋषी शम्भु अस्ति। देवता जरिमा अस्ति। जरिमा देवता वृद्धावस्थायाः नाशं करोति। अंतकम् नाशं करोति। बालकम् वृद्धिंगतं करोति तथा नैक व्याधिनाशं कृत्वा अंतकम् दूरं करोति । इयम देवता सदा आनंदीवृत्तयः अस्ति तथा यदा कः अपि पापकार्य करोति सा तम् तत् कार्यं प्रति दूरं करोति। सा दिर्घायु प्रदानं करोति व्यसनात् सर्वान् निरोधं करोति ।

**"तुभ्यमेव जरिमन्....वा त्वं हसः ॥१॥"**

हे जरिमन्! तुभ्यम् अयम् बालकः वृद्धिंगतं भवति तथा व्याधिरूपेण मृत्युयोगम् अयम् बालकम् न हिंसितम्। हर्षित मनस्य मित्रदेवता! यथा माता पुत्रम् योग्यं मार्गं दर्शयति तथा त्वमपि अयम् बालकम् मित्रद्रोहपापात् दूरं करोसि।[१०]

षष्ठकाण्डे अष्टाधिकशतमसूक्ते, मेधावर्धनसूक्ते ऋषी शौनक अस्ति। देवता मेधा अस्ति । एतत् सूक्ते मेधा देवतां देवत्वशक्तेः धारणयोग्यं इति मन्यते। सा सर्वान् लाभान्वितं करोति इति प्रार्थनां अकुर्वन्। सा वेदयुक्त बह्मण्वती, ब्रह्मणद्वारा सेवित ब्रह्मजूता, अतीन्द्रियार्थदर्शी, ऋषिभिः प्रशंसनीयः, ब्रह्मचारिभिः प्रवर्धितः श्रेष्ठ मेधा

---

(८) काण्ड-३
२८) पशुपोषण सूक्त पृष्ठ क्र. ३१
५५६) एकैकयैषां सृष्टया सं बभूव यत्र गा असृजन्त भूतकृतो विश्वरुपाः ।
यत्र विजायते यमिन्यपर्तुः सा पशून् क्षिणाति रिफती रुशती ॥१॥"
५६१) "शिवा भव ..... इहैधि ।।३।।"
५६२) "इह पुष्टिरिह ..... पोषय ।। ४।।"
५६३) "यत्रा सुहार्दः ..... पशुंश्च ।। ५।।"
५६४) "यत्रा सुहार्दा ..... पशुंश्च ।। ६।।"

(९) काण्ड - १
१७) रुधिारस्त्रवनिवर्तनधामनीबन्धान सूक्त पृष्ठ क्र. १२
७५) "अमूर्यायान्ति....... हतवर्चसः ।।१।।"
७६) "तिष्ठावरे....... धमनिर्मही ।।२।।"
७८) "परि वः..... सुकम् ।।४।।"

१०) काण्ड - २
२८) दिर्घायुप्राप्ति सूक्त पृष्ठ क्र. ३
३०८) "तुभ्यमेव जरिमन् ......... वा त्वं हसः ।।१।।"

देवतां वा देवत्वस्य रक्षणं कर्तुं ऋषय: आवाहनं कुर्वन्ति। सर्वम् प्रात: सायं, मध्यन्दिनं मेधां सेवां कुर्वन्ति। सूर्यस्य रश्मिभि: वचसा मेधां धारणं कुर्वन्ति।[११]

पंचमकाण्डे सप्तमेसूक्ते अरातिनाशन सूक्ते ऋषी अथर्वा अस्ति । देवता सरस्वति अस्ति । एतत् सूक्ते देवान् आवाहित यज्ञे, देवान् या हर्षितं करोति ताम मधुमतिं, वाचां वयं उच्चारणम कुर्म: । अनुमति, सरस्वति तथा भग देवतां वयं शरणं गच्छाम: तथा आवाहनं कुर्म:।[१२]

प्रथमकाण्डे षडविंशति सूक्ते शर्मप्राप्तिसूक्ते ऋषी ब्रह्मा अस्ति। देवता इन्द्र (इन्द्राणि) अस्ति। सूक्ते इन्द्राणि अर्थात् शचि वाणी, कर्म, प्रज्ञा। एतस्य आधारे शचि अर्थात् जीवात्मन: वाचाशक्ति, कर्मशक्ति, एवं विचारशक्ति भवति । सा शक्ति वयं हर्षितं करोति। सा अस्मभ्यम शरीरे आरोग्यं प्रदानं कुर्यु: तथा अस्मभ्यम् बालकानां आनन्दितं कुर्यु:।[१३]

द्वितीयकाण्डे द्वितीये सूक्ते भुवनपतिसूक्ते ऋषी अथर्वा अस्ति। देवता गंधर्व अप्सरा समूह अस्ति। एतत् सूक्ते गं अर्थात् भूमि वा अंशू वा वाक् तथा धर्व अर्थात् धारक, पोषक। अप्सरा अर्थात् अप् सरस्- अप् सृष्टयाम् प्रारंभे उत्पन्न मूल क्रियाशील तत्त्व अस्ति। अप् पदस्य सहाय्येन चलित विभिन्न शक्तय:, प्राणस्य धारा: अर्थात् गंधर्वा: भार्या सन्ति। ता: अंतरिक्षे निवसन्ति। ता: अंतरिक्षात् पृथ्वित: आवागमनम् कुर्वन्ति। ता: संसारस्य पालक, पोषकानां गंधर्वा: भार्या सन्ति अत: वयं नमनं कुर्म:। विद्युत प्रभावेन तथा नक्षत्र प्रभावेन प्राणधारा: धारकतावेन सह, प्राणिनां सह संयुक्तं भवन्ति। प्रेरणादायी, ग्लानीनाशहर नेत्रयो: इच्छा या: पूर्णम् कुर्वन्ति ता: वयं नमनं कुर्म:। प्राणधारा: अथवा प्रकाश अंशु: मनसि नेत्रयो: तुष्टं कुर्वन्ति। ता: मन: तरंगितं कुर्वन्ति।[१४]

तृतीयकाण्डे विंशति सूक्ते रयिसंवर्धनसूक्ते ऋषी वसिष्ठ अस्ति। देवता अर्यमा, भग, बृहस्पति, इंद्रवात, विष्णु, सरस्वती, सविता, वाजी सन्ति। एतत् सूक्ते वाच: अधिष्ठात्रि, सत्यप्रिय देवी सरस्वतीं समस्त ऋषय: नमनं तथा आवाहनं कृतवन्त: यत् सा तेषां प्रभूतं संपदां प्रदानं करोति।

---

(११) काण्ड-६
१०८) मेधावर्धनसूक्त पृष्ठ क्र. ५०
१६२२) "त्वं नो मेथे ........ यज्ञिया ।।१।।"
१६२३) "मेथामहं ...... हुवे ।।२।।"
१६२४) "मेधामृभवो ....... वेशयामसि ।।३।।"
१६२६) "मेथां सायं ........ वेशयामहे ।।४।।"

(१२) काण्ड- ५
७) अरातिनाशन सूक्त पृष्ठ क्र. १०
६८०) "सरस्वतिमनुमतिं ........ देवहुतिषु ।।४।।"
६८१) "यं याचाम्यहं ........ बभ्रणा ।।५।"

(१३) काण्ड - १
२६) शर्मप्राप्तिसुक्त सूक्त पृष्ठ क्र. १८
११४) " सुषुदत ........ स्कृधि ।।४।"

(१४) काण्ड-२
२) भुवनपतिसुक्ते सुक्त पृष्ठ क्र. २
१६१) "अनवद्याभिः ........... पराचयन्ति ।।३।।"
१६२) "अभ्रिये....... कृणोमि ।।४।।"
१६३) "या कलन्दास्त........ ऽप्सराभ्योऽकरं नमः ।।५।"

ईदृशी संपूर्ण विश्वे नारीणां उद्धार कर्तुं प्राचीन काले प्रशंसनीयं कार्यं कृतः अतः समस्त ऋषयः तासाम् नमनं कृतवन्तः। तासु यज्ञे हर्विभागः समर्पितं अकुर्वन्। एतत् कार्यं अति महत्वपूर्णं अस्ति। तेन अखिल विश्वे भारतीय स्त्रीयं सम्मानं प्रदानं अकरोत् । तासाम् मानव कल्याण कार्यं प्रति वयं अत्यादरेण नतमस्तकं भवामः।[१५]

**व्याख्याता**
**संस्कृत संहिता सिद्धान्त विभागः**
**महात्मा गांधी आयुर्वेद महाविद्यालयः, रुग्णालयः**
**अनुसंधान केन्द्रम्, सालोड ( हि. ) वर्धा, महाराष्ट्रः**
**पिन कोड - ४४२००१**
**ई-मेल - sarojtirpude@gmail.com**
**sarojnimbalkar@ymail.com**

(१५) काण्ड-३
२०) रयिसंवर्धन सुक्त
पृष्ठ क्र. २३
५०४) "प्रणो यच्छत्वर्यमा प्रभगः प्र ......... दधातु मे ॥ ३॥"
५०८) "अर्यमणं ......... वाजिनम् ॥ ७ ॥"

# आधुनिकसंस्कृतवाङ्मये जीवनचरित्रपरकं साहित्यम्

**हर्षलता गंगवारः**

आधुनिकभारतवर्षे सर्वकारेण संस्कृतसाहित्यसर्जनाय पर्याप्तं प्रोत्साहनं प्रदत्तम् । तेनात्र एकतो महाकाव्य गीतिकाव्य नाट्यसाहित्य गद्यकथासाहित्य प्रभृतित्रिविधानां रचनाधाराऽनारतं प्रवहमाना दृश्यते, अपरतस्तु तुकान्तकविता, छन्दोमुक्तकविता, दूरदर्शनाकाशवाणीभ्यां प्रसारणीयाः रूपकाः, वार्ताः, लघुकथाः, कविताः, यात्रावृतान्ताः, पत्रलेखनं प्रभृतयोऽभिनवा विधा विकसिता जाताः। सन्त्यत्र शतशः सुरसाहित्यस्य संरक्षणैकमानसाः, शारदाराधानाभिरता विशारदाः, ये हि सततमधुनापि गीर्वाणवाक् साधनैकधियः, संस्कृतसाहित्यसंवर्धनैकचेतसः, विद्याविलासमनसः, साहित्यावतंसाः, नानाविधासु ग्रन्थरचनानिपुणाः, पत्रपत्रिकादिसम्पादनतत्परा वीक्ष्यन्ते। ततः साम्प्रतं संस्कृतवाङ्मये भूयसी श्रीवृद्धिरभिवर्तते ।

तदिह विविधासु विधासु विधीयमानम् अर्वाचीनं जीवनचरितात्मकं रचनाकार्यं समासतः प्रस्तूयते ।

**प्रबन्धकाव्येषु जीवनचरित्रपरकं साहित्यम् -**

वर्तमानसमये हि संस्कृत महाकाव्यादित्वेन विशालं प्रबन्धकाव्यसाहित्यं विरच्यते । तत्र भगवदाचार्यस्य भारतपारिजातम्, पारिजातापहारः, पारिजातसौरभमिति काव्यत्रयम्, श्रीमदखिलानन्दशर्मणः दयानन्ददिग्विजयम्, सनातनधर्मविजयमिति महाकाव्यद्वयम्, मीमांसाचार्य पंडितपूर्णप्रसादब्राह्मणस्य सत्यहरिश्चन्द्रम्, व्याकरणाचार्य हरिप्रसादस्य 'शाहवंशचरितम्, सत्यव्रतशास्त्रिणः बोधिसत्त्वचरितं गुरुगोविन्दसिंहचरितं श्रीरामकीर्तिं च, भरतराजघिमरे शास्त्रिणः काव्यतीर्थस्य महेन्द्रोदयम्, कविपतेः उमापतिद्विवेदिनः पारिजातहरणम्, रामावतारशर्मणः भारतानुवर्णनम्, कृष्णप्रसादघिमरे शास्त्रिणः श्रीकृष्णचरितामृतम्, नाचिकेतसिति, मथुरानाथशास्त्रिणः जयपुरवैभवं गोविन्दवैभवं च, गङ्गाप्रसादोपाध्यायस्य आर्योदयम्, रामसनेहिदासस्य जानकीचरितामृतम्, द्विजेन्द्रनाथ शास्त्रिणः स्वराज्यविजयम्, रेवाप्रसादद्विवेदिनः सीताचरितम्, वसन्तत्र्यंवकशेवडे इत्यस्य विन्ध्यवासिनीविजयम्, शुम्भवधम् रमेशचन्द्रशुक्लस्य गांधीगौरवं लालबहादुरशास्त्रिचरितं बंगलादेशादिकम्, कपिलदेवद्विवेदिन आत्मविज्ञानम्, आचार्यमेधाव्रतस्य दयानन्ददिग्विजयम्, दिलीपदत्तशर्मणः उपाध्यायस्य मुनिचरितामृतम्, गङ्गादत्तशास्त्रिणः तैलङ्गस्य अलिविलाससंलापम्, रघुनाथशास्त्रिणः चन्द्रोपालम्भवर्णनम्, मथुराप्रसादशास्त्रिणः प्रतापविजयम्, पण्डिताक्षमारावया सत्याग्रहगीता, अभिनवरामानुजाचार्यस्य श्रीनिवासगुणाकरम्, हरिदाससिद्धान्तवागीशस्य रुक्मिणीहरणम्, हरिनारायणदीक्षितस्य विश्वचरितम्, भीष्मचरितं च, भवानीदत्तशर्मणो भरतचरितम् बहोरपाठकस्य सुदामाचरितम्, देवीसहायपाण्डेयस्य आजादचरितम्, रामकिशोरमिश्रस्य विद्योत्तमा कालिदासीयम्, मनुदेवभट्टाचार्यस्य विशुद्धवैभवं वैष्णववैभवं च, राधेश्याम् गंगवारस्य चन्द्रगुप्तचरितं श्रद्धानन्दचरितं प्रभृतयः कृतयः विशेषेण उल्लेख्याः सन्ति।

**गीतिकाव्येषु जीवनचरित्रपरकं साहित्यम् -**

साम्प्रतमिह गीतिकाव्यसाहित्यमपि वैशद्येन सृज्यते । अस्मिन् वाङ्मये महतां महात्मनां वन्द्यमानचरणानां विभूतिपादानां जीवनचरितं संश्रित्य एताः कृतयः प्रामुख्यं भजन्ते- विश्वेश्वरपाण्डेयेन कृतं कवीन्द्रकर्णाभरणं रोमावली शतकमिति काव्यद्वयम्, नित्यानंदशास्त्रिणा कृतं हनुमद्दूतम्, श्रीवसन्तत्र्यंबकशेवडे प्रणीतं रघुनाथतार्किकशिरोमणिचरितम्, श्रीकृष्णचरितम्, मोतीबाबाजामदारचरितम्, अभिनवमेघदूतमिति काव्यचतुष्टयम्, रमाकान्तशुक्लेन कृतं भातु मे भारतम्, वैमानिकीं च, जयदत्त उप्रेतिना रचितं सिद्धान्तशतकम्, रामकिशोरमिश्रेण प्रणीतं बालचरितम्, प्रभाकरनारायणकवठेकरकृतं विमानवातायनतः, अभिराजराजेन्द्रमिश्रेण प्रणीतं विमानयात्राशतकम्, प्रशस्यमित्रशास्त्रिकृतम् आषाढस्य प्रथमदिवसे, चामराजनगररामशास्त्रिणा रचिता सीतारावणझरी, यशस्करकृतं देवीस्त्रोतम्, विद्याधरदत्तपाण्डेयकृतं पराम्बास्तुतिशतकं चेति अन्यान्यपि गीतिकाव्यानि स्त्रोतकाव्यानि सूक्तिकाव्यानि चास्मिन् काले प्रणीतानि सन्ति । येषु जीवनचरितस्य वर्णनं सर्वतोमुख्यं वर्तते। समेतानि गीतिकाव्यानि संस्कृतवाङ्मयस्य गौरवं निर्वहन्ति ।

**नाट्यवाङ्म्येषु जीवनवृत्तपरकं साहित्यम् -**

अर्वाचीननाट्यग्रन्थेषु जीवनवृतान्तपरकेषु पंडितविश्वेश्वरपाण्डेयस्य रुक्मिणीपरिणयम्, शङ्कर-लालमहामहोपाध्यायस्य सावित्रीचरितम्, ध्रुवाभ्यदयम्, पार्वतीपरिणयं च, मूलशङ्करमाणिकलालयाज्ञिकस्य छत्रपति साम्राज्यम्, प्रतापविजयम्, संयोगिता स्वयंवरं च, अम्बिकादत्तव्यासस्य सामवतम्, हरिदास सिद्धान्तवागीशस्य वङ्गीयप्रतापम्, शिवाजीचरितम् च, मथुराप्रसाद दीक्षितस्य वीर प्रतापम्, गान्धिविजयम्, भारतविजयम्, शङ्करविजयं च, वेलणकरस्य यां चिन्तयामि प्राणाहुतिश्च, यतीन्द्रविमलस्य निष्किञ्चनयशोधरम्, जीवनलालपारीखस्य छायाशाकुन्तलम्, महालिङ्गशास्त्रिणः कलिप्रादुर्भावः, कपिलदेव द्विवेदिनः परिवर्तनम्, कटारामेवारामस्य शान्तिसागरः, रामकिशोरमिश्रस्य त्यागपत्रनिरासम् अङ्गुष्ठदानं च, दशरथद्विवेदिनो भारताभ्युदयमित्यादयः।

**गद्यवाङ्मये जीवनवृतान्तपरकं साहित्यम् -**

वर्तमानसमये हि उपन्यासकथाख्यायिकादिरूपेण विपुलं गद्यसाहित्यं प्रणीयते। तत्र विविधेषु क्षेत्रेषु प्रथितयशसां सद्वृत्तमाश्रित्य समुल्लेख्याः मुख्या गद्यकृतयः सन्ति-विश्वेश्वरपाण्डेयेन प्रणीता मन्दारमञ्जरी, अम्बिकादत्तव्यासेन कृतं शिवराजविजयं कथापञ्चकं च, ग्रामज्योतिः, कथामुक्तावलीति काव्यत्रयम्, कृष्णमाचार्येण रचिता मन्दारवती, चक्रवर्तिना राजगोपालेन कृता शैवालिनी, कुमुदिनी प्रभृतयः, जागुअलवारायङ्गरेण च रचिता जयन्तिका, श्री हरिरायेण कृता तर्कचन्द्रिका, हरेरामत्रिपाठिना आकाङ्क्षावादः, पण्डितश्रीगोविन्दआप्टे महोदयेन विरचितं सर्वानन्दकरणम्, पण्डितशिवजी उपाध्यायेन कृतं संस्कृतकथाकुञ्जः आचार्यमेधाव्रतेन कुमुदिनीचन्द्रः, नृसिंहाचार्येण सौदामिनी, आचार्यश्रीगैलस्य मनका, रामशरणत्रिपाठिना कौमदी, कथाकल्लोलिनी, रामकिशोरमिश्रेण किशोरकथावलिः अन्तर्दाहश्च ।

आधुनिकयुगे इतिवृत्तविषयकं गद्यवाङ्मयमपि विविधं सृष्टम्, यथा- श्रीमतो रामवतारशर्मणः भारतेतिहासवर्णनपरः ग्रन्थः भारतीयमितिवृत्तम्, विदेशीयेतिहासपरश्च देशान्तरीयेतिहासतरङ्गः, द्विजेन्द्रनाथस्य

शास्त्रिणः संस्कृतसाहित्यस्य इतिहासग्रन्थः संस्कृतसाहित्यविमर्शः, हंसराजाग्रवालस्य संस्कृतसाहित्येतिहासादयः एतेषु ऐतिहासिकग्रन्थेष्वपि प्राचीनभूपतीनां शेमुषीमतां सतां हुतात्मनां राष्ट्रभक्तानां राजन्यानां च चारुतरं चरितं निबध्यते ।

अन्यासां भाषाणाम् उपन्यासा अपि कैश्चन संस्कृतभाषायाम् अनूदिता, तथाहि–शैलताताचार्येण कृता दुर्गेशनन्दिनी, वामनकृष्णचित्तलेविरचितं लोकमान्यतिलकचरितम्, हरिचरणभट्टाचार्येण कृता कपालकुण्डला, भगवदाचार्येण स्वामिकृतं गान्धिचरितम् अथ च चारुदेव शास्त्रिकृतं गान्धिचरितम्, वेङ्कटेशवामनसोवानिकृतः शिवाजीप्रबन्धाः, गणपतिशास्त्रिकृतं सेतुयात्रानुवर्णनमित्यादयः।

**पत्रपत्रिकासाहित्यम्** –

अद्यत्वे भारते त्रिंशदधिकाः पत्रपत्रिकाः संस्कृेन प्रकाश्यन्ते । तत्र साप्ताहिकेषु– संस्कृतम् (अयोध्या), भवितव्यम् (नागपुरम्), गाण्डीवम् (वाराणसी). युगगति (गोरखपुरम्), पाक्षिकेषु– साकेतः (अयोध्या), वाक् (देहरादूनम्), मासिकेषु– संस्कृतमंजूषा (कलिकाता), गुरुकुलपत्रिका (कांगड़ी, हरिद्वारम्), भारतोदयः (ज्वालापुरम्), सम्भाषणसंदेशः (वैङ्गलूरुः), लोकसंस्कृतम् (पाण्डिचेरी), संस्कृतामृतम् (दिल्ली), त्रैमासिकेषु– संस्कृतमंजरी (दिल्ली संस्कृत अकादमी), सागरिका (सागर वि.विश्वविद्यालय.), सारस्वती सुषमा (स. सं. वि. वि. वाराणसी), अर्वाचीनसंस्कृतम् (देववाणी प. नवदेहली), विश्वसंस्कृतम् (पंजाबः) आन्वीक्षिकी (उ.सं.अकादमी), ब्रजगन्धा (मथुरा), संगमनी (इलाहाबादः) पारिजातम् (कानपुरम्), षाण्मासिकेषु– आरण्यकम् (बिहारः), पुराणम् (वाराणसी), पूर्णत्रयी (केरलः), प्रमुखाः सन्ति । एताः पत्र–पत्रिकाः प्रकाशनेन अर्वाचीनसंस्कृतसाहित्यस्य गौरवं वर्धयन्ति । एतासु पत्र पत्रिकासु जीवनचरितमयं साहित्यमपि साधु प्रकाश्यते ।

**अनुसंधान संस्थानानि** –

संस्कृतेन वैज्ञानिकपद्धतिमाश्रित्य प्रायः सर्वेऽपि विश्वविद्यालयाः शोधकार्यं प्रवर्तयन्ति सहस्रशोऽनुसंधित्सवः प्रतिवर्षमिह विद्यावाचस्पतिः डॉक्टरेति उपाधिधारिणो भवन्ति। अथ च कतिपयानि शोधसंस्थानान्यपि शोधकार्यं कारयन्ति, यथा–विश्वेश्वरानन्द वैदिक शोध संस्थानम्, काशिराजशोधसंस्थानं वाराणसी च। तदत्र विभिन्नेषु महाविद्यालयेषु विश्वविद्यालयेषु शोधसंस्थानेषु संपद्यमानैः शोधकार्यैः संस्कृतसाहित्यम् अहर्निशं समृद्धिमापद्यते।

एवमवलोक्यते यदर्वाचीन संस्कृतसाहित्यमद्य विविधाभिः साहित्यिकविधाभिः विश्ववाङ्मये गौरवं तनुते। जीवनचरितपरकं साहित्यं चैतेषु संस्थानेषु बहुशोऽनुसन्धीयते।

**द्वारा– डॉ. राधेश्याम गंगवारः**
**आचार्यः, संस्कृतविभागः,**
**वी.एस.के.सी. राजकीय महाविद्यालयः,**
**डाकपत्थर, विकासनगरम् (देहरादूनम्), उत्तराखण्डम्**

# साङ्ख्यकारिकाया: टीकाकाराणां मते आप्तप्रमाणम्

-डॉ. प्रीतम सिंह:

आप्तवचनस्य लक्षणं कारिकायामुक्तम् 'आप्तश्रुतिराप्तवचनन्तु'। आप्ता नाम रागादिवियुक्तस्या-गृह्यमाणकारणपरार्था व्याहृति:। श्रवणं श्रुति: आप्ता चाऽसौ श्रुतिराप्तश्रुति:, तद्यथा तन्तु घट इति। आप्तेभ्य: श्रुतिराप्तश्रुति:। आप्तश्रुतिश्चाप्तश्रुतिश्चाप्तश्रुति: सरूपाणामित्येकशेष:। तत्र पूर्णेनाप्तश्रुतिग्रहणेनैव प्रतिपादयति अपुरुषबुद्धिपूर्वक आम्नाय स्वतन्त्र: पुरुषनि:श्रेयसार्थप्रवर्तमानो नि:संशयं प्रमाणमिति। द्वितीयेन मन्वादिनिबन्धनानां च स्मृतीनां वेदाङ्गेतिहासपुराणानां शिष्टानां नानाशिल्पाभियुक्तानां चादुष्टमनसां यद्वचनस्तत्प्रमाणमित्येतत् सिद्धम्भवति तु शब्दोऽवधारणार्थ:।

आप्तश्रुतिरेवाप्तवचनं न शब्दमात्रम् एवं सति यदुक्तं तन्मात्रान्तरीयै: शिशपादिशब्दानां निर्विकल्पकानुमानेऽन्तर्भावस्त्रिलक्षणत्वादिति तद् यत्नत: प्रतिक्षिप्तं भवतीति व्याख्यातानि प्रमाणानि। एतै: पूर्वोक्तं प्रमेयं यथास्वप्रतिपत्तव्यमिति।

माठराचार्येण व्याख्यातमस्मिन् प्रसङ्गे 'आप्तश्रुतिराप्तवचनं तु' तृतीयप्रमाणम्। आप्ता ब्रह्मादय आचार्या:, श्रुतिर्वेदस्तदेतदुभयमाप्तवचनम्। आप्ति: साक्षादर्थप्राप्तिर्यथोपलम्भस्तथा वर्तते इत्याप्त: साक्षात्कृतधर्मा यथार्थाप्त्या श्रुतार्थग्राही तदुक्तमाप्तवचनम्। तत्रापि प्रसिद्धिर्लक्षणागुणयोगातिस्र: शब्दवृत्तय:। तत्र लक्षणात्रैविध्यम्, जहल्लक्षणाऽजहल्लक्षणा-जहदजहल्लक्षणा चेत्यादि प्रमाणशास्त्रेषु बहुतर: प्रपञ्चमस्ति। तत्र प्रकान्तरमेव तावदभिधीयते भगवत: कपिलमतम्।[१]

जयमङ्गलाकारेण आप्तश्रुतिप्रमाणविषये एवं व्याख्यातम्-

**'आप्त: क्षीणदोष:। यच्चाहु 'स्वकर्मण्यभियुक्तो यो रागद्वेषविवर्जित:'**[२]

आप्तेभ्यो या श्रुतिपरम्परया श्रुतिरागता तदाप्तवचनम्, तैर्दृष्टोऽनुमितो वार्थ: परत्र स्वबोधसदृशबोधान्त-रोत्पत्त्ये शब्देनोपदिश्यते। यदाप्तवचनं तन्न प्लवते। च शब्दोऽनुमानेन तुल्यकक्ष्यत्वख्यापनार्थ:। यथा त्रिकालविषय-मनुमानं तथापि वचनमाप्तमिति।

आचार्यगौडपादेन आप्तश्रुतिप्रमाणाख्यव्याख्याकृता यदत्र आप्तवचनमेतल्लक्ष्यमस्ति आप्तश्रुतिश्च लक्षणमस्ति। अर्थात् आप्तपुरुषै: उच्चारितैर्यथार्थवाक्यैर्जायमानमर्थज्ञानमेव शब्दप्रमाणमुच्यते। अत: वेद:, श्रुति:, स्मृति, इतिहास:, पुराणम्, धर्मशास्त्रसामान्यशास्त्रादि- वाक्यै: जायमानं ज्ञानमपि शब्दप्रमाणे एव अन्तर्निहितं भवति। बौद्धप्रभृतिवाक्यानां प्रामाण्यनिरसनकारणमासीद् अनाप्तोच्चारिता।[३]

सांख्यतत्त्वकौमुदीकारेण आप्तश्रुतिप्रमाणं लक्षितम् 'आप्तश्रुतिराप्तवचनन्तु' इति। आप्तवचनमिति लक्ष्यनिर्देश: परिशिष्टं लक्षणम्। आप्ता प्राप्ता युक्तेति यावत्। आप्ता चाऽसौ श्रुतिश्चेति 'आप्तश्रुति:'। श्रुति: वाक्यजनितं वाक्यार्थज्ञानम्। तच्च स्वत: प्रमाणम्। अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषशङ्काविनिर्मुक्तेतियुक्तं

१. आगमो हयाप्तवचनमाप्तम्। माठरवृत्ति: पृ. १०

२. जयमङ्गला पृ. ७१.

३. गौडपादभाष्य पृ. १३.

भवति। एवं वेदमूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तं भवति। दृष्टान्तं प्रस्तौति आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणासम्भवः, सुप्तप्रबुद्धस्यैव पूर्वेद्युरगवतानाममर्थानामपरेद्युः। तथा चावट्यजैगीषव्यसंवादे भगवान् जैषीगव्यो दशमहाकल्पवर्जित–जन्मस्मरणमात्मानमुवाच 'दशसु महाकल्पेषु विपरिवर्तमानेन मया' इत्यादिना ग्रन्थसन्दर्भेण।[४]

युक्तिदीपिकायामाप्तवचनलक्षणं विवेचितं तत्कारणेन 'आप्तवचनं नाम स्वार्थाभि- प्रायरहितैः कथितं परार्थवचनमाप्तवचनमिति।[५]

एवं हि व्याख्यातृभिः आप्तवचनप्रमाणलक्षणं व्याख्यातं तत्रादौ शब्दप्रमाणनिरूपणम् अगृहीताशक्तिकेन शब्देन शाब्दबोधो न भवतीति गृहीतशक्तिशब्द एव शाब्दबोधजनकः। तत्र शक्तिग्रहश्चानुमानाधीनमिति। आप्तवचनमिति लक्ष्यनिर्देशो लक्षणन्त्वाप्तश्रुतिरिति वेदप्रतिपादिताश्चाऽर्थाः केनाऽपि प्रमाणेन न प्रामाण्योपलब्धिविषयाः, किन्तु स्वतः प्रमाणमिति आप्तशब्दस्य यथार्थ इत्यर्थः। तथा च आप्ता चाऽसौ श्रुतिः आप्तश्रुतिः, श्रुतिर्नाम वाक्यजनितं वाक्यार्थज्ञानम्, आप्तं यथार्थं वाक्यजनितं वाक्यार्थज्ञानं शब्दप्रमाणम्, तेन वेदतन्मूलकश्रुतिः स्मृतीतिहासपुराणादिवाक्यजन्यं ज्ञानं युक्तमुपपद्यते अथवा श्रुतिरित्यस्य श्रूयते या सा श्रुतिः = श्रवणविषयीभूतः शब्द इत्यर्थः। आप्ता यथार्थाः, तथा च यथार्थशब्दत्वं लक्षणमुपपत्रम्, तेन वेदतन्मूलकवाक्यानां यथार्थशब्दत्वात्प्रमाणत्वम्। एवञ्च प्रमाणत्रयस्य परतः प्रामाण्याऽनभ्युपगमाद् वेदानां च स्वतः प्रमाणाऽभ्युपगमात् स्वर्गापूर्वदेवताविषयो वैदिकोपदेशो निर्दोषतया युक्तो भवति। लौकिकश्च शब्दः प्रमाणान्तरमूलो युक्तो मानान्तराऽभावे त्वनाप्त अयुक्त इति। अत्र च यदा शब्दस्य प्रमाणत्वं तदा वृत्तिप्रतिबिम्बितचैतन्यस्य प्रमात्वमिति, तत्संग्रहाय श्रुतिपदं वाक्यजनितं वाक्यार्थज्ञानमिति व्याख्यातम्।

एतावता एतद्वक्तुं शक्यते यत् त्रिविधप्रमाणेषु तृतीयप्रमाणमाप्तवचनमस्ति आप्तं नाम प्राप्तम् अर्थात् युक्तमिति। वाक्यं नाम श्रुत्या जायमानं वाक्यार्थज्ञानमिति। वाक्यार्थज्ञानाप्तता द्विधा सिद्धयेत स्वतः परतश्च। वेदः तत्र स्वतः प्रमाणमस्ति तथा च स्मृतिपुराणादिशास्त्रप्रतिपादितज्ञानानि ता अपि वेदे एव आश्रिता भवन्ति। वेदमूलकत्वादेव एतानि प्रमाणानि मन्यन्ते अन्यथा न। अत एव वेदो यत्र स्वतः प्रमाणमस्ति पुराणादयस्तत्र परतः प्रमाणानि सन्ति। आप्तवाक्यमर्थात् शब्दप्रमाणस्य एतद् द्वयमेव प्रकारः। वाक्यार्थप्रमेये वाक्यञ्च तस्य लिङ्गिविज्ञानं तस्यान्तर्भावमनुमाने कर्तुं न शक्नुमः यतो हि यथा धूमः स्वप्रमेयस्य वह्नेः लिङ्गमर्थात् तस्मिन् विराजमान एको धर्मोऽस्ति तद्वदेव वाक्यं वाक्यार्थरूपप्रमेयस्य धर्मरूपलिङ्गं भवति। देवदत्तो गृहं याति एतस्य वाक्यस्य अर्थो देवदत्तस्य गमनक्रियास्ति। एतत् तद्वाक्यस्य क्रियाधर्मः कदापि भवितुं नशक्नोति, यतो हि वाक्यस्य स्थितिर्गमनक्रियारूपिन्यर्थे कस्मादपि सम्बन्धात् सम्भावितं नास्ति। अथवा वाक्यमेकञ्च वाक्यार्थसम्बन्धः पूर्ववद् गृहीतो न भवति। प्रत्येकं प्रयोक्ता स्वीयनूतनवाक्यस्य एव प्रयोगं करोति। अत आप्तवचनस्यान्तर्भावोऽनुमानेन कर्तुं न शक्यते। वाक्यार्थस्य इन्द्रियसन्निकर्षाभावे प्रत्यक्षमपि नास्ति अतो आप्तवचनमेकं स्वतन्त्रं प्रमाणमस्ति इति मन्तव्यम्। अत्राप्तग्रहणेन जैनबौद्धचार्वाकादीनां मान्यतानां प्रामाण्यस्य निराकरणमग्रे विधास्यते। सांख्यमते प्रमाणस्य भदेत्रयमेव स्वीकृतमस्ति – 'त्रिविधं प्रमाणमिष्टं' विधानं विधा, तिस्रो विधा अस्य तत् त्रिविधं त्रिप्रकारकमित्यर्थः अर्थात् त्रीण्येव प्रमाणानि सन्ति।[६]

४. सांख्यतत्त्वकौमुदी पृ. ६५.

५. युक्तिदीपिका पृ. ४६–४७

६. सांख्यकारिकायाः

परञ्च श्रूयन्ते अन्यानि अपि प्रमाणानि अन्यैः शास्त्रैः शास्त्रकारेभ्यो[७] वा वा स्वीक्रियन्ते। किं तानि प्रमाणानि न सन्ति? यदि सन्ति तर्हि आहत्य संख्या अधिका स्यात् कथं त्रीण्येव? उत वा न सन्ति तानि प्रमाणानि अथवा सन्ति प्रमाणरूपाणि परञ्च त्रीणि यानि प्रोक्तानि तेष्वेव अन्तर्भूतानि भवन्ति एवं पूर्वपक्षाशङ्का। तस्य निरसनं कर्तुं विभिन्नैः सांख्याचार्यैः विविधव्याख्याः कृताः।

अर्थात् प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः, अर्थापत्तिः, अभावश्च वेदान्तिभटाचार्यमते एतानि षट्प्रमाणानि साध्यं सिद्धयन्ति, अतः त्रीणि न अपि तु षट्प्रमाणानि सन्ति। अन्ये वदन्ति यद् एभिरू षड्भिः सह सम्भवैतिह्यचेष्टां सम्मेल्य नवप्रमाणानि सन्ति। वैशेषिका बौद्धाश्च प्रत्यक्षमनुमानमेतद्द्वयमेव प्रमाणमिति वदन्ति। अतः कथं वा निश्चेतुं शक्यते यत् त्रीणि एव प्रमाणानि सन्तीति।

प्रमाणभेदानां संख्या त्रयो एवास्ति। अन्यैरुक्तम् अन्यानि एतेषु त्रिष्वेव अन्तर्निहितानि भवन्तीति निगदन् माठराचार्यः लिखति- सर्वाणि हि प्रमाणानि प्रमाणत्रयेऽविरुद्धानि। तत्र पीनो देवदत्तो दिवा न भुङ्क्ते इत्युक्ते रात्रौ भुङ्क्ते इत्यर्थः। सार्थापत्तिरनुमानमेव। प्रस्थ इत्युक्ते चत्वारः कुडवा इति बोधः सम्भवः सोऽप्यनुमानमेव अभावश्च प्राग्भावप्रध्वंसात्यन्ताभावभेदाच्चतुर्द्धा यथा व्रीहिशोषणदर्शनान्न वृष्टो देव इति वृष्टेरभावं साधयति। सोऽप्यनुमानभेदः। यथा

**दक्षिणेन तु विन्ध्यस्य सह्यस्य तु यदुत्तरम्।**
**पृथिव्यामासमुद्रायां स प्रदेशो मनोरमः ॥**

इत्युक्ते तत्र शोभना गुणाः सन्तीति प्रतिभोत्पद्यते, प्रतिभा जानतां ज्ञानम्, साऽप्यनुमानमेव। ऐतिह्यं यथा अस्मिन् वटे यक्षिणि प्रतिवसति इति जना वदन्ति इत्युक्ते सा विघ्नं करोति, धनादिकं यच्छतीति ज्ञानं तदप्यनुमानमेव। उपमानम्-यथा गौस्तथा गवय इत्यप्यनुमानमेव किं तृषितस्याञ्जलिना क्षुधितस्य पञ्चाङ्लियोगात् पृथुलाक्षिप्रभृति-दर्शनाद् दुर्बलस्य, तर्जनीपङ्कदर्शनाद् ज्ञानमित्याद्यनुमानमेव तस्मात्त्रिष्वेवान्य-दन्तर्भवति इति युक्तमभिहितं त्रिविधं प्रमाणमिति।

अन्यसांख्यशास्त्रविदोऽनुसरन् जयमङ्गलाकारोऽपि त्रिषु एव प्रमाणेषु अनेक- दर्शनाचार्याणां प्रमाणानि अन्तर्भूतानीति दर्शितवानस्ति। सर्वेषां प्रतिभादीनां प्रमाणानां सिद्धत्वात् त्रिविध एवान्तर्भाव इत्यर्थः। तत्र ग्रामे नगरे वा वर्तते इति प्रतिभोत्पन्ना। तत्र यदा क्षीणदोषस्य तदभिज्ञात्वात् प्रत्यक्षमेव। तस्याक्षीणदोषस्य वितथत्वादप्रमाणम्। याप्यर्थावि- संवादिनी कदाचित्का सापि कदाचित्कादेव निमित्तादुत्पद्यमानाऽनुमानमेव न प्रामाणान्तरम्। 'गौरिव गवय' इत्यौपम्यम्, तत्र गवयमजानन्। कश्चिदाप्तः पृच्छति कीदृशो गय' इति? स तमाह यादृशो गोस्तादृशी गवय इति। तदेतदाप्तवचनमेव न प्रमाणान्तरम्। यदापि लब्धोपदेशो गवय पश्यति, तदापि गवि दृष्टेनैव विषाणादिना लिङ्गेन गवयस्य व्यवहारं प्रवर्तयतीत्यनुमानमेव न प्रमाणान्तरमिति। हवैः श्रवण इत्यैतिह्यम्। एतदाप्तवचनमेव न प्रमाणान्तरम्। इति ह इति निपातसमुदाय उपदेशपरम्परया वर्तते इति एवैतिह्यम्। स्वार्थे ष्यञ्

---

७. चार्वाकास्तावदेकं द्वितीयमपि पुनर्बौद्धवैशेषिकौ द्वौ।
भासर्वज्ञश्च साङ्ख्यस्त्रितयमुदयनाघश्चतुष्कं वदन्ति।
प्राहुः प्राभाकाराः पञ्चकमपि च वयं तेऽपि वेदान्तविज्ञाः।
षटकं पौराणिकास्त्वष्टकमभिदधिरे सम्भवैतिह्ययोगात्॥

नास्तीह घटोऽनुपलम्भाद् इत्यभावः। तत्र घटशून्यप्रदेश एव घटाभावः स च प्रत्यक्षप्रमाणसिद्धत्वान्न प्रमाणान्तरम्।[८] माषः प्रस्थ इत्युक्ते चत्वारः कुडवा इतीदमपि सम्भवति इत्ययं सम्भवः। तत्र समुदायलिङ्गावयवलिङ्गिनः परिच्छेदादनुमानमेव। अवयवैः समुदायस्यारब्धत्वात् कार्यकारणलक्षणः सम्बन्धः। देवदत्तो दिवा न भुङ्क्ते बलवांश्च इत्युक्ते अर्थात् रात्रौ भुङ्क्ते इत्यर्थापत्तिः। तद् एव रात्रौ तस्य प्रतीतिरनुमानान्न भिद्यते। इदमेव चान्यथानुपपत्तिरित्युच्यते।

आचार्यगौडपादानुसारेण यद्यपि त्रीणि प्रमाणानि भवन्ति पारे सूचितानि प्रमाणानि न पृथग्भूतानि अपितु एतेष्वेव त्रिषु अन्यषट्प्रमाणानि दृष्टादिष्वन्तर्भूतानि। तत्रानुमाने तावदर्थापत्तिरन्तर्भूता सम्भवाभावप्रति-भैतिह्योपमानश्चाप्तवचने। तस्मात् त्रिष्वेव सर्वप्रमाण- सिद्धत्वात् त्रिविधं प्रमाणमिष्टम्।

सांख्यतत्त्वकौमुदीकारोऽपि त्रिष्वेव प्रमाणेषु अन्येषां प्रमाणानाम् अन्तर्भावं घोषयन् लिखति प्रमाणसामान्यलक्षणेषु तद्विशेषलक्षणेषु च सत्सु यानि प्रमाणान्तराण्युपमानादीनि प्रतिवादिभिरभ्युपेयन्ते तान्युक्तलक्षणेष्वेव प्रमाणेष्वन्तर्भवन्ति। तथाहि-उपमानं तावद्यथा गौस्तथा गवय इति वाक्यम्। तज्जनिता धीरागम एव। योऽप्ययं गवयशब्दो गोसदृशस्य वाचक इति प्रत्ययः सोऽप्यनुमानमेव। यो हि शब्दो यत्र वृद्धैः प्रयुज्यते सोऽसति वृत्यन्तरे तस्य वाचकः यथा गोशब्दो गोत्वस्य। प्रयुज्यते चैवं गवयशब्दो गोसदृश इति तस्यैव वाचक इति तद् ज्ञानमनुमानमेव यत्तु गवयस्य चक्षुः सन्निदृष्टस्य गोसादृश्यज्ञानं तत् तु प्रत्यक्षमेव। अत एव स्मर्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षम्। न त्वन्यङ्गविसादृश्यमन्यच्च गवये। भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते। च स चंद्गवये प्रत्यक्षो गव्यपि तथेति नोपमानस्य प्रमेयनतरत्वमस्ति, यत्र प्रमाणान्तरमुपमानं भवेत् इति न प्रमाणान्तरमुपमानम्। एवमर्थापत्तिरपि न प्रामणान्तरम्। तथा हि जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्याऽदृष्टस्य कल्पनमर्थापत्तिरिति अभिमता वृद्धानाम्। साप्यनुमानमेव यदा खल्वव्यापकः सत्रेकत्र नास्ति तदाऽप्यत्रास्ति यदा अव्यापक एकत्रास्ति दाऽन्यत्र नास्तीति सुकरः स्वशरीरे व्याप्तिग्रहः। तथा च सतो गृहाभावादर्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानमेव। न च गृहाभावेन वा सत्त्वमपहियते, सत्त्वमेवानुपपाद्यमानमात्मानं न बहिरवस्थापयेत्। न च गृहाभावेन वा सत्त्वमपहियते। सत्त्वमेवानुपपाद्यमानमात्मानं न बहिरवस्थापयेत्। तथा हि चैत्रस्य गृहासत्त्वेन सत्त्वमात्रं विरुध्यते गृहसत्त्वं वा? न तावद्यत्र क्वचन सत्त्वस्यास्ति विरोधो गृहासत्त्वेन सत्त्वमात्रं विरुध्यते गृहसत्त्वं वा? न तावद्यत्र क्वचन सत्त्वस्यास्ति विरोधो गृहासत्त्वेन भिन्नविषयत्वात्। 'देशसामान्येन गृहविशेषाक्षेपोऽपि पाक्षिक इति सामान्यविषयतया विरोध इति चेत्, येन प्रमाणविनिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात् नापि प्रमाणनिश्चितो गृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमपि प्रतिक्षेपं सांशयिकत्वं च व्यपनेतुमर्हतीति युक्तम्। गृहावच्छिन्नेन चैत्राभावेन गृहसत्त्वं विरुद्धयते न तु सत्त्वमात्रं तस्य तत्रौदासीन्यात्। तस्माद् गृहाभावेन लिङ्गेन सिद्धेन सतो बहिर्भावोऽनुमीयते इति युक्तम् एतेन विरुद्धयोः प्रमाणयोर्विषयव्यवस्थयाऽविरोधोपादनमर्थापत्तेर्विषय इति निरस्तम्। अवच्छिन्नानवच्छिन्नयोर्विरोधा-भावात्। उदाहरणान्तराणि चार्थापत्तेरेवमेवाऽनुमानेऽन्तर्भावनीयानि तस्मान्नानुमानात्प्रमाणान्तरमर्थापत्तिरिति सिद्धम् ।

---

८. गौडपादेन अमावस्य पृथक् प्रमाणत्वं न निरस्तम्।

एवमेवाभावोऽपि प्रत्यक्षमेव न हि भूतलस्य परिणामविशेषात् कैवल्यलक्षणादन्यो घटाभावो नाम। प्रतिक्षणपरिणामिनी हि सर्व एव भावा:, ऋते चितिशक्ते:। स च परिणामभेद ऐन्द्रियक इति नास्ति प्रत्यक्षावरुद्धो विषयो यन्त्राऽभाव: प्रमाणान्तरमभ्युपेयेतेति।

सम्भवस्तु यथा– खार्या द्रोणाढकप्रस्थाद्यवगम:। स चानुमानमेव खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्या द्रोणादिसत्त्वम् अवगमयति। यच्चानिर्दिष्टप्रवक्तृकम्। प्रवादपारम्पर्यमात्रम्– इति होयुर्वृद्धा:, इत्यैतिह्यम्, यथा इह वटे यक्ष: प्रतिवसति, इति न तत् प्रमाणान्तरम्, अनिर्दिष्टप्रवक्कत्वेन सांशयिकत्वात् आप्तवक्तृकत्वनिश्चयत्वागम एव इत्युपपन्नं 'त्रिविधं प्रमाणमिति।' त्रिष्वेव प्रमाणेषु अन्येषां प्रमाणानामन्तर्भावो भवति इति युक्तिदीपिकाकारेणापि व्याख्यानम्।

एवमेव अन्ये न्यूनाधिक प्रमाणं सूचयन्ति। तत्रोच्यते उपमानप्रमाणम्–'प्रसिद्धिसाधर्म्यात् साध्यसाधनमुपमानम्। प्रसिद्ध: प्रज्ञातस्तेन साधर्म्यात् साध्यस्याऽप्रसिद्धस्य साधनमधिगमो यस्तदुपमानम्। 'गवय' पदार्थ: ज्ञात: तज्ज्ञं पृच्छति। तज्ज्ञ: वदति गौरिव गवय इति। अनन्तरं गोसदृशं प्राणिनं दृष्ट्वा– यद्यपि पूर्वमपरिचित आसीत् तथापि पूर्वमुक्तवतो व्याख्यातु: कथनं प्रसिद्धगोविषेय श्रोतु: कृते अवगमने सुकरं सरलञ्चासीत् तद् अत: प्रसिद्धगोविषये उक्तवा तेन सह गवयस्य साधर्म्यबोधितवान् तदनन्तरं जायमानज्ञानसंस्कारेण स: जनोऽवगच्छति यद् गोसदृशोऽयं पशुर्गवय इति।

आप्तवचनेन उत्पन्नो य: संस्कारस्तेन संस्कारेण संयुक्तो जन: पश्चात् प्रत्यक्षेण गवयं दृष्ट्वा तेन सह गवयशब्दस्य यत् सम्बन्धज्ञानं शक्तिज्ञानं, तदेव उपमानं कथ्यते। तात्पर्यमस्ति यद् दृश्यमानगोचरसदृशगवयस्तु मध्ये गवयपदस्य शक्तेर्ज्ञानमेव उपमानमस्ति। अत्र मतद्वयमुपस्थितम्, प्रथममतानुसारं पूर्वोक्तपद्धत्या गवयप्रत्यक्षत्वमेव उपमानम्, द्वितीयमतानुसारं गोसदृशो गवयपदशक्तेर्ज्ञानमुपमानम्। यदि उपमा एतादृगस्ति तर्हि उपमानम्, ऐतिह्यञ्च द्वयमपि प्रमाणान्तरं भवितुं नार्हति। यतो हि आप्तोपदेशेनैव तद् गतार्थं भविष्यति। आप्तोपदेशबलेनैव प्रतिपत्ता व्यक्ति: अप्रसिद्धं गवयं जानाति न तु साधर्म्याद् अत: शब्दप्रमाणादृते नास्ति पृथगुपमानप्रमाणमिति।

अपि च 'इति ह उवाच याज्ञवल्क्य' एतादृशं पृथक् प्रमाणम् ऐतिह्यमपि शब्दप्रमाणाद् भिन्नं नास्ति। कारणं तत्रापि कस्यचिद् विशेषवक्तमावश्यकता भवति अर्थाद् वक्तु: अपेक्षाकारणात् तदपि शब्दप्रमाणे एव अन्तर्गतम्भवति। अत: उपमानम्, ऐतिह्यञ्च पृथक् प्रमाणं न वक्तव्यं यतो हि शब्दप्रमाणे एव तस्य कार्यं सिद्ध्यति।

अपि च अर्थापत्ति:, सम्भव:, चेष्टा चेत्येतेषां प्रमाणान्तरत्वकथनं नापेक्षितं यतो हि एतेषामपि कार्यमनुमानप्रमाणेन सिद्धयति। तत्र अर्थापत्तिर्नाम यत्र अर्थद्वयस्य पूर्व व्यभिचाराभावं ज्ञात्वा पश्चात् कस्यचिदेकस्य दर्शनेन श्रवणेन वा द्वितीयस्य प्रतिपत्तिर्भवति यथा – गुडावलोकनेन माधुर्यज्ञानं श्रवणेनापि गुडं श्रुत्वा तस्य माधुर्यस्य ज्ञानं यस्य ज्ञानं यद्यपि शब्दैरनुभवयोग्यं नास्ति तथापि भवति।

सम्भवस्य प्रमाणत्वविषये यदुक्तं द्रोणं प्रस्थं वर्तते, एवं कथनेन प्रस्थे अर्धद्रोणाढूयमपि सन्निविष्टं वर्तते इति निश्चीयते। एतदेव यत्र सम्भावनां कल्पयति तत्र सम्भवप्रमाणान्तरमिति। किन्तु साहचर्यकल्पना अनुमानाम् पृथग्नास्ति उक्तमेव।

अभावप्रमाणमपि स्वतन्त्रं प्रमाणं वक्तुं न शक्यते, यतो हि अभावप्रमाणं तदस्ति यथा धूमस्य उपस्थित्याम् अग्नेरुपस्थिति: प्रतीयते, तथैव धूमाभावे अग्नेरभाव: प्रतीयते। किन्तु एवं प्रतिद्वन्द्वाभावे साहचर्यकल्पनया

अर्थापत्तिरभावः कथ्यते। किन्तु यदा व्यभिचारसाहचर्यकल्पनया तत्राभावबोधः प्रमाणं न अपितु प्रमाणा एव । यथा तप्तायोगोलके धूमभावस्तु भवत्येव किन्तु अग्नेरभावस्तु न भवति, अतः धूमभावाद् अग्नेरभावो बोधोऽप्रमाणमस्ति। एवं व्यभिचारिसाहचर्यस्य कल्पनया जायमानमभावज्ञानं प्रमाणं न भवति। अव्यभिचारिसाहचर्यज्ञानेन जायमानमभावज्ञानं प्रमाणन्तु अस्ति किन्तु तस्य अनुमाने अन्तर्भावो भवति। अतः अभावनामकमपि पृथक् प्रमाणं नास्ति।

जनाभिप्रायं सूचयति उदरताऽनमञ्जलिकरणमादिः। एषः शरीरव्यापारः यथा उदरस्पर्शः नेत्रनिमेलनादि चेष्टा अस्ति। उक्तव्यापारेण प्रत्यक्षेणाप्रतीयमानं बुभुक्षानिद्रादिः प्रतीयते अतः चेष्टा अपि प्रमाणमेवास्ति परमतिरिक्तं प्रमाणं न, अपितु अनुमानमेवास्ति यतो हि भोजनादिभिः सह जायमानमुदरताऽनादिव्यवहारो व्यापार एवास्ति। तथा च तेन व्यवहारेण सहचारिबुभूक्षादीनां प्रतीतिर्भवति, अतः सः व्यापारोऽनुमानात् पृथगपि अनुमानप्रमाणे एवान्तर्भावो भवति।

पुनरपि शङ्कते यद् उपमानम्, ऐतिह्यम्, अर्थापत्तिः, सम्भवः चेष्टा च कामं पृथक् प्रमाणं न भवेत् किन्तु प्रतिभानामकं पृथक् प्रमाणन्तु भवति? आह केयं प्रतिभा नाम? आह योऽयमनादौ संसारे देवमनुष्यतिरश्चामभिन्नेऽर्थे बी रव्यादौ प्रत्यये पूर्वाभ्यासः। यथा 'व्याघ्रोऽत्र प्रतिवसति' इत्युक्ते विनापि स्वेदवेपथुप्रभृतयो भवन्ति। तस्मात् बाह्येनार्थेनाभ्यासवशादेव प्रतिभैव देवमनुष्यतिरश्चामितिकर्तव्याङ्गतत्वात्प्रमाणमिति। हि प्रत्यक्षानुमानाप्तवचनं च विहाय अन्यप्रमाणस्य स्वरूपं न सिद्धयति, यतो हि यदि पूर्वाभ्याससंस्कारेणोत्पन्ना प्रतीतिः प्रतिभास्ति इति स्वीक्रियते तर्हि सा प्रतिभा प्रत्यक्षम्, अनुमानम् अथवा आप्तवचनमस्ति एतत् सिद्धयति। कारणैः प्रत्यक्षानुमानागमैश्च विनापि जन्यबोधः सर्वज्ञानस्वरूपं बोधयति, अतः तस्मादृते किञ्चिद् ज्ञानकारणात् प्रत्ययादिभिरतिरिक्त न किमपि प्रमाणमर्थात् सर्वाण्यपि अन्यानि प्रमाणानि त्रिष्वेव अन्तर्भूतानि भवन्तीति।

सांख्याचार्यैः सूचितानि प्रमाणानि 'प्रत्यक्षमनुमानमाप्तवचनञ्च' त्रीणि सन्ति। एतेषां त्रयाणामपि प्रमाणानां का उपयोगिता? इति विचारणीयो विषयः। वस्तुतया एतेषां त्रयाणामपि प्रमाणानां पृथक्-पृथगुपयोगितास्ति। तत्र प्रत्यक्षप्रमाणस्य गतिरिन्द्रियगोचरपदार्थपर्यन्तं सीमितमस्ति। पञ्चविंशतिपदार्थेषु केवलं पञ्चमहाभूतानि एव इन्द्रियेभ्यः साक्षात् सन्निकर्षमवाप्नुवन्ति। अत एतान्येव इन्द्रियसन्निकर्षकारणात् प्रत्यक्षप्रमाणेन सिद्ध्यन्ति तथा च एतेभ्यो जायमानं सुखं दुःखञ्च द्वयोरपि अनुभवः प्रत्यक्षमेव मन्यते। तत् मानसप्रत्यक्षमित्युच्यते। सांख्यदर्शनानुसारं चितिच्छायापत्रबुद्धेरनुभव एव ज्ञानमस्ति यत् प्रत्यक्षानुमानाप्तवचनैः त्रिभिर्भवति, अर्थात् प्रत्यक्षेण प्रमाणेन इन्द्रियगोचरबाह्यपदार्थानां प्रतीतिर्भवति।[९]

अनुमानत्रयस्य भेदत्रयमुक्तं पूर्ववत्, शेषवत्, सामान्यतोदृष्टञ्चेति एतेभ्यः पूर्ववत् शेषवच्चापि तेषामेव पदार्थानां ज्ञानं ज्ञापयति येषां पदार्थानां यदा कदापीन्द्रियगोचरत्वं सिद्धं सम्भवति, अथवा येषामनुभूतिस्तु भवति साक्षात्कारो न भवति। सामान्यतोदृष्टानुमानेन तेषां पदार्थानां सत्ता प्रामाणिकता भवति ये कदापि इन्द्रियगोचरा न भवन्ति। तौ केवलं द्वौ एव प्रकृतिः पुरुषश्च। एतयोः केवलं सत्तानुमानम्भवति साक्षात्कारो न भवति। बाह्याभ्यन्तरं

करणमपि कार्यमेवास्ति अतः तस्य किमपि उपादानकारणमवश्यमेव स्यात्। यत्किमपि उपदानं स्यात् तत् त्रिगुणात्ममेव स्यात् कारणमेते सर्वेऽपि पदार्थाः त्रिगुणात्मका एव सन्ति तच्चोपादानं मूलप्रकृतिरस्ति। एवमेव मनः,

९. सांख्यकारिका, वसुमतिव्याख्या पृ. १११-११३

बुद्धिरहङ्कार-इन्द्रियाणि च कारणानि सन्ति यानि कस्यचित् कर्तुरुपयोगाय सन्ति। कारणं कस्यचित् कर्त्रे उपयोगाय भवति, यथा ग्रन्थं दृष्ट्वा कस्यचिद् अध्येतु: सत्ताया: बोधो भवति यद्यपि तदध्येतुस्साक्षात्कारो न भवति तथैव एतेषां कारणानामुपयोक्तु: पुरुषस्य सत्ताया अपि एतेन एव सामान्यतोदृष्टानुमाने प्रामाणिकता भवति। एवमेव सामान्यतोदृष्टेन एव प्रकृतिपुरुषयोर्द्वयोरपि सत्ता सिद्ध्यति।

किन्तु स्वर्गापवर्गयो: सिद्धिरनुमानेन न सम्भवति। अत एव तयो: सिद्धये आप्तवचनप्रमाणोपन्यास: कृत:। यथा वैदिकयज्ञादिके यस्य स्वर्गस्य निरूपणं कृतं तस्मिन् श्रुतिरेव प्रमाणमस्ति तथैव पुरुषस्य अपवर्गरूपकैवल्यम् अर्थात् मोक्षस्य सत्ता एवं स्वरूपविषये कपिलादीनामाप्तपुरुषाणां वचनमेव प्रमाणमस्ति प्रत्यक्षेण अनुमानेन वा तस्य सिद्धि: सम्भवो नास्ति।[१०]

त्रयाणामपि प्रमाणानामुपयोगिताविषये माठराचार्येण स्वीयायां माठरवृत्त्यां प्रोक्तम्-'अत्र प्रधानपुरुषावतीन्द्रियौ तयो:' सामान्यतोदृष्टादनुमानात्सिद्धि:। यस्मान्महदादिलिङ्गं त्रिगुणं दृष्ट्वा कार्यं तत्कारणमदृष्टमप्यस्ति त्रिगुणञ्चेति साध्यते प्रधानेन। न ह्यसत: सदुत्पत्ति: स्यादिति। न च कारणसदृशं कार्यं स्यादिति। व्यक्त तु प्रत्यक्षेणैव साधितमिति तदर्थे न प्रयत्न:। यस्माज्जडमपि प्रधानं प्रसृतिचेष्टा-विलक्षणव्यङ्ग्यबोधजनिका, सापि न तथा हि- नेत्रमङ्गमिषेणाऽहूयमानां काञ्चिदवलोक्य दर्शकस्तावदनुमिनोति 'इयं मामाऽह्वायति मामऽह्वानानुकूलचेष्टावत्त्वात्, अनयाऽहम् 'आकांक्ष्यमाण: नेत्रचेष्टयाऽऽह्वानात्' इति तज्जन्य-बोधाऽनुमितिरेवेति। सर्वेषां प्रमाणानां प्रमाणात्रयान्यतमाऽन्तर्भूतत्वात् 'त्रिविधं प्रमाणमिष्टमिति' व्युत्पन्नम्। व्यक्तं तु प्रत्यक्षेणैव साधितमिति तदर्थं न प्रयत्न: यस्माज्जडमपि प्रधानं प्रसूतिक्रियायां प्रवर्तते तस्मादस्ति लौहस्य चलनक्रिया शक्तिहेतुचुम्बकवदवश्यं पुरुष इति ज्ञसिद्धि: ।[११]

माठराचार्यस्य मतमेवानुसरन् जयमङ्गलाकारेण प्रमाणानामुपयोगितास्ति इत्यस्मिन् विषये प्रोक्तं त्रिविधं प्रमेयं प्रत्यक्षं परोक्षम्, अत्यन्तपरोञ्चेति। तत्र यत्सामान्यतोदृष्टमनुमानं तस्मादतीन्द्रियाणां परोक्षाणां प्रसिद्धिरस्ति तन्निश्चय:, तेषां प्रत्यक्षविषयत्वात् पूर्ववच्छेषवतोस्त्वनुमानयोर्भविष्यद्भूतार्थवृत्तित्वाद् वर्तमानेष्वतीन्द्रियेषु च प्रवृत्यसम्भव:। अत्र जयमङ्गलाकारेण स्वीयव्याख्यायां न कुत्रापि प्रमाणशब्दप्रयोग: दृत:। अपि च कारिकोक्तशब्दा: यथा-प्रत्यक्षम्, अनुमानम्, आप्तवचनञ्च एतेषां स्थाने-अनुमानं परोक्षम्, आप्तवचनञ्च अत्यन्तपरोक्षमिति पदप्रयोग: कृत:। तस्मादपि चासिद्धमिति। सामान्यतोदृष्टादनुमानाद् यदसिद्धं परोक्षम्, तदत्यन्तपरोक्षत्वादागमात् सिद्धम्। यथा स्वर्गापवर्गाविति। प्रत्यक्षे तु प्रमेये दृष्टमेव व्याप्रियत इत्यर्थादुक्तम्।

**सामान्यतस्तु दृष्टाद् अतीन्द्रियाणां प्रतीतिरनुमानात् ।**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥**[१२]

केन प्रमाणेन कस्य पदार्थस्य प्रतीतिर्भवति अस्मिन् विषये च व्याख्याकाराणां मतैक्यं दृश्यते तथैव गौडपादभाष्यरचयितु: आचार्यगौडपादस्य अप्येष एव विचारो दृश्यते यत् 'सामान्यतो दृष्टादनुमानादतीन्द्रियाणा-मिन्द्रियाण्यतीत्य वर्तमानानां सिद्धि:। प्रधानपुरुषावतीन्द्रियौ सामान्यतोदृष्टेन अनुमानेन साध्यते-यस्मान्महदादिलिङ्ग

---

१०. सामान्यतोदृष्टादुभयसिद्धि:। सांख्यसूत्रम् १/१०३

११. युक्तिदीपिकाया: ६ कारिकाया: व्याख्यायाम्

१२. सांख्यकारिका ६

त्रिगुणम्, यस्येदं त्रिगुणं कार्यं तत् प्रधानमिति, यश्चाचेतनं चेतनमिव भाति अतीन्योऽधिष्ठाता पुरुष इति। व्यक्तं प्रत्यक्षम् साध्यम् तस्मादपि चासिद्धं परोक्षमाप्तागमात्-सिद्धम्- 'यथेन्द्र देवराजः, उत्तराः कुरवः स्वर्गेऽपसरस' इति परोक्षमाप्तवचनात् सिद्धम्।[१३]

'सामान्यतोदृष्टानुमानम्' प्रत्यक्षं पूर्ववत् प्रमाणं च द्वाभ्यां पृथक् करोति कारिकोक्तस्तु शब्दः। यतो हि प्रधानपुरुषादीनां प्रतीतिस्तु न तु प्रत्यक्षप्रमाणेन न वा पूर्ववदनुमानेन भवति। सांख्यशास्त्रे बुद्धिवृत्तिरेव प्रमाणशब्देनाभिहिता। अतः तदनुसारमेवानुमानव्याख्या कृता सांख्यतत्त्वकौमुदीकारेण सामान्यतोदृष्टानुमानम्' इति पदस्य व्याख्यां कुर्वता प्रोक्तम् अध्यवसायाद् इति। यतो 'लिङ्गज्ञानजन्यचित्तवृत्तिः अनुमानप्रमाणमस्ति। प्रमाणेनैतेन प्रधानपुरुषादीनां प्रतीतिर्भवति- प्रतीतिस्तु- 'चिच्छायापत्तिः' इति बुद्धौ आत्मनः प्रतिबिम्बकारणाद् बुद्धेः चेतनेन सह तादात्म्यापत्तिर्भवति येन बुद्धेर्ज्ञानरूपव्यापारो भवति।

शङ्कते तत्किं सर्वेष्वतीन्द्रियेषु सामान्यतोदृष्मेव प्रवर्तते? तथा च यत्र तन्नास्ति महदाद्यारम्भक्रमे स्वर्गापूर्वदेवतादौ च तत्र तेषामभावः प्रात्प इत्यय आह तस्मादपि' इति। अर्थात् कारिकोक्तं च पदेन 'शेषवद्' अनुमानेनापि येषामतीन्द्रियपदार्थानां ज्ञानं न शक्तये तेषां ज्ञानममागमप्रमाणेन भवति।[१४] तात्पर्यमस्ति यत् प्रत्यक्षेण अनुमानेन वा अगम्यपरोक्षस्य ज्ञानं श्रुतिप्रमाणेन भवतीति।

**सन्दर्भग्रन्थाः -**


१. सांख्यकारिका

२. जयमङ्गला

३. गौडपादभाष्यम्

४. सांख्यप्रवनभाष्यम्

५. युक्तिदीपिका

६. माठरवृत्तिः

७. सांख्यतत्त्वकौमुदी



**- अतिथि शिक्षकः,**
**दर्शनविभागः, सनातनधर्म**
**आदर्श संस्कृत महाविद्यालयः,**
**डोहगी, ऊना, हिमाचल प्रदेशः**


---

१३. प्रसिद्धिरनुमानाद् -युक्तिदीपिका

१४. साधयम्- माठरवृत्तिः